रसबन्धयोग्या परमप्रकर्षप्राप्ता शुद्धिः अनिवृत्तिबादरसंपरायाद्धायाः संख्येयेभ्यो भागेभ्यः परतो जायते, तदा बन्धमेव न ता आयान्तीति। न च 'यथा क्षपकश्रेण्यारोहे अनिवृत्तिबादरसंपरायाद्धायाः संख्येयेषु भागेषु गतेषु परतोऽतिविशुद्धत्वात् मतिज्ञानावरणादीनां एकस्थानकरसबन्धः, तथा क्षपकश्रेण्यारोहे सूक्ष्मसम्परायस्य चरमद्विचरमादिसमयेषु वर्तमानस्य अतीवविशुद्धत्वात् केवलद्विकस्य सम्भवद्बन्धस्य एकस्थानकरसबन्धः कथं न भवति' इति शङ्कनीयम्; स्वल्पस्यापि केवलद्विकरसस्य सर्वघातित्वात्। सर्वघातिनां च जघन्यपदेऽपि द्विस्थानकरसस्यैव सम्भवात्। शुभानामपि प्रकृतीनां अत्यन्तशुद्धौ वर्तमानश्चतुःस्थानकमेव रसं बध्नाति। ततो मन्दमन्दतरविशुद्धौ तु त्रिस्थानकं द्विस्थानकं वा। संक्लिश्यमानायां वर्तमानस्तु शुभप्रकृतीरेव न बध्नातीति कुतः तद्गतरसस्थानकचिन्ता?। यास्तु अतिसंक्लिष्ट मिथ्यादृष्टौ नरकगतिप्रायोग्या वैक्रियतैजसाद्याः शुभप्रकृतयो बन्धमायान्ति, तासामपि तथा स्वाभाव्यात् जघन्यतोऽपि द्विस्थानक एव रसो बन्धमायाति नैकस्थानक इति[1] ध्येयम्। ननु उत्कृष्टस्थितिमार्ग संक्लेशोत्कर्षेण भवति, ततो यैरेव[2] अध्यवसायैः शुभप्रकृतीनां उत्कृष्टा स्थितिर्भवति तैरेव एकस्थानकोऽपि रसः किं न स्यादिति चेत्; उच्यते—इह हि प्रथमस्थितेरारभ्य समयवृद्ध्या असंख्येयाः स्थितिविशेषा भवन्ति। एकैकस्यां च स्थितौ असंख्येया रसस्पर्धकसंघातविशेषाः। तत्र उत्कृष्टस्थितिं बध्नमानानां प्रतिस्थितिविशेषं असंख्येया ये रसस्पर्धकसंघातविशेषास्ते तावन्तो द्विस्थानकरसस्यैव घटन्ते, न एकस्थानकस्येति न शुभप्रकृतीनां उत्कृष्टस्थितिबन्धेऽपि एकस्थानकरसबन्धः। उक्तं च—

'उक्कोसठिईअज्झवसाणेहिं एगट्ठाणिओ होइ।
सुभियाण तं न जं ठिइअसंखगुणिया उ अणुभागा॥" [ पंच० द्वा० ३ गा० ५४ ] इति।

§९ एवं स्थिते देशघातिनां अवधिज्ञानावरणादीनां सर्वघातिरसस्पर्धकेषु विशुद्धाध्यवसायतो देशघातितया परिणमनेन निहतेषु, देशघातिरसस्पर्धकेषु च अतिस्निग्धेषु अल्परसीकृतेषु, तदन्तर्गतकतिपयरसस्पर्धकभागस्य उदयावलिकाप्रविष्टस्य क्षये, शेषस्य च विपाकोदयविष्कम्भलक्षणे उपशमे, जीवस्य अवधिमनःपर्यायज्ञानचक्षुर्दर्शनादयो गुणाः क्षायोपशमिकाः प्रादुर्भवन्ति। तदुक्तम्—

'निहएसु सव्वघाईरसेसु फड्डेसु देसघाईणं।
जीवस्स गुणा जायंति ओहीमणचक्खुमाईया॥" [ पंच० द्वा० ३ गा० ३० ]

निहतेषु देशघातितया परिणमितेषु। तदा अवधिज्ञानावरणादीनां कतिपयदेशघातिरसस्पर्धकक्षयोपशमात् कतिपयदेशघातिरसस्पर्धकानां चोदयात् क्षयोपशमानुविद्ध औदयिको भावः प्रवर्तते। अत एव उदीयमानक्षयोपशमवृद्ध्या वर्धमानावधिज्ञानी पठितः। यदा च अवधिज्ञानावरणादीनां सर्वघातीनि रसस्पर्धकानि विपाकोदयमागतानि भवन्ति, तदा तद्विषय औदयिको भावः केवलः प्रवर्तते। केवलं अवधिज्ञानावरणीय सर्वघातिरसस्पर्धकानां देशघातितया परिणामः क्वापि विशिष्टगुणप्रतिपत्त्या कदा-

१ इति। मु० द०। २ °तैरेव° मु०।

चित्र तामन्तरेणैव स्यात्, भवप्रत्ययगुणप्रत्ययभेदेन तस्य द्वैविध्योपदर्शनात् । मनःपर्यायज्ञानावरणीयस्य तु विशिष्टसंयमाप्रमादादिप्रतिपक्षतयैव, तथाक्षमाधानामेव च कल्ले तेषां बन्धनात् । चक्षुर्दर्शनावरणादेरपि चक्षुरिन्द्रियपर्याप्त्यादिघटितसामग्र्या तथापरिणामः । मतिश्रुतावरणाऽचक्षुर्दर्शनावरणान्तरायप्रकृतीनां तु सदैव देशघातिनामेव रसस्पर्धकानामुदयो न सर्वघातिनाम्, ततः सदैव तासां औदयिकक्षायोपशमिकौ भावौ संमिश्रौ प्राप्येते, न केवल औदयिक इति उक्तं पञ्चसंग्रहमूलटीकायाम् । एतच्च तासां सर्वघातिरसस्पर्धकानि येन तेनाध्यवसायेन देशघातीनि कर्तुं शक्यन्ते इत्यभ्युपगमे सति उपपद्यते अन्यथा च चोपनीतानां मतिज्ञानावरणादिदेशघातिरसस्पर्धकानां अनिश्चितविपाकादराद्धायाः संख्येयेषु भागेषु गतेष्वेव सम्भवात् तदर्वाग् मतिज्ञानाद्यभावप्रसङ्गः, तदभावे च तत्प्रतिलम्भसत्त्वाल्लाभानुपपत्तिरिति अन्योन्याश्रयापातेन मतिज्ञानादीनां मूलत एव अभावप्रसङ्गात् । एवं मतिश्रुताज्ञानाचक्षुर्दर्शनादीनामपि क्षायोपशमिकत्वेन भणनात् सर्वघातिरसस्पर्धकोदये तल्लाभात् देशघातिरसस्पर्धकानां च भवाभवत्वात् अध्यवसायमात्रेण सर्वघातिनो देशघातित्वपरिणामानभ्युपगमे सर्वजीवानां तल्लाभानुपपत्तिरिति भावनीयम् ।

§ १० ननु यदि येन तेनाध्यवसायेन उत्कटरसस्पर्धकानां सर्वघातिनां देशघातितया परिणामः तदा अर्वाग्दशायां तदन्य एव किं प्रयोजनमिति चेत्, तत् किं 'प्रयोजनक्षतिभिया सामग्री कार्यं नार्जयति' इति भवतामध्यवसितोऽस्ति ? । एवं हि पूर्वे प्रयोजने दण्डादनुमं चक्रं न भ्राम्येत । तस्मात् प्रकृते हेतुसमाजादेव सर्वघातिरसस्पर्धकस्य यौगपद्येनाध्यवसायेन तदन्ये तथाध्यवसायेन सर्वदा तद्देशघातित्वपरिणामे च बाधकाभावः ।

§ ११ तदेवं ज्ञानावरणदर्शनावरणान्तरायाणां विपाकोदयेऽपि क्षयोपशमोऽविरुद्ध इति स्थितम् । मोहनीयस्य तु मिथ्यात्वानन्तानुबन्ध्यादिप्रकृतीनां प्रदेशोदये क्षायोपशमिको भावोऽविरुद्धः, न विपाकोदये, तासां सर्वघातिनीत्वेन तद्रसस्पर्धकस्य तथाविधाध्यवसायेनापि देशघातितया परिणमयितुमशक्यत्वात्, रसस्य देशघातितया परिणामे तादात्म्येन देशघातिन्या हेतुत्वकल्पनात् । विपाकोदयविष्कम्भणं तु तासु सर्वघातिरसस्पर्धकानां क्षायोपशमिकसम्यक्त्वादिलब्ध्यभिधायकसिद्धान्तबलेन क्षयोपशमान्यथानुपपत्त्यैव तथाविधाध्यवसायेन कल्पनीयम् । केवलज्ञानकेवलदर्शनावरणयोस्तु विपाकोदयविष्कम्भायोग्यत्वे स्वभाव एव शरणमिति भावः । हेत्वभावादेव तदभावस्तद्धेतुत्वेन कल्प्यमानेऽध्यवसाये तत्क्षयहेतुत्वकल्पनाया एवौचित्यादिति तु युक्तम् । तस्मात् मिथ्यात्वादिप्रकृतीनां विपाकोदये न क्षयोपशमसम्भवः किं तु प्रदेशोदये ।

§ १२ न च 'सर्वघातिरसस्पर्धकप्रदेशा अपि सर्वस्वघात्यगुणघातनस्वभावा इति तत्प्रदेशोदयेऽपि कथं क्षायोपशमिकभावसम्भवः' ? इति वाच्यम्, तेषां सर्वघातिरसस्पर्धकप्रदेशानां अध्यवसायविशेषेण मनाग्मन्दानुभावीकृतविरलवेद्यमानदेशघातिरसस्पर्धकेऽन्तःप्रवेशितानां यथास्थितस्वफलजननासमर्थत्वात् ।

---

१ चरित्र त । २ °पद्यते अन्यथा त । ३ °भावस्य इति° त । ४ तदेवैत्य° मु ।

§१३ मिथ्यात्वाऽनन्तानुबन्ध्यादिद्वादशकषायरहितानां शेषमोहनीयप्रकृतीनां तु प्रदेशोदये विपाकोदये वा क्षयोपशमोऽविरुद्धः, तासां देशघातिनीत्वात् । तदीयसर्वघातिरसस्य देशघातित्वपरिणामे हेतुः चारित्रानुगतोऽध्यवसायविशेष[१] एव द्रष्टव्यः । परं ता प्रकृतयोऽध्रुवोदया इति तद्विपाकोदयाभावे क्षायोपशमिकभावे विजृम्भमाणे, प्रदेशोदयवत्योऽपि न ता मनागपि देशघातिन्यः । विपाकोदये तु[२] प्रवर्तमाने क्षायोपशमिकभावसम्भवे मनाग्मालिन्यकारित्वाद्[३] देशघातिन्यस्ता भवन्तीति संक्षेपः । विस्तरार्थिना तु मत्कृतकर्मप्रकृतिविवरणादिविशेषग्रन्था अवलोकनीयाः । उक्ता क्षयोपशमप्रक्रिया ।

[ २ मति-श्रुतज्ञानचर्चा । ]

§१४ इत्थं च सर्वघातिरसस्पर्धकजन्यमतिज्ञानावरणादिक्षयोपशमजनितं मतिश्रुतावधिमनःपर्यायभेदात् चतुर्विधं क्षायोपशमिकं ज्ञानम्, पञ्चमं च क्षायिकं केवलज्ञानमिति पञ्च प्रकारा ज्ञानस्य ।

मतिज्ञानस्य लक्षणम्–

§१५ तत्र, मतिज्ञानत्वं श्रुताननुसार्यनतिशयितज्ञानत्वम्, अवग्रहादिक्रमवदुपयोगजन्यज्ञानत्वं वा । अवध्यादिकमतिशयितमेव । श्रुतं तु श्रुतानुसार्येवेति न तयोरतिव्याप्तिः । श्रुतानुसारित्वं च धारणात्मकपदपदार्थसम्बन्धप्रतिसन्धानजन्यज्ञानत्वम् । तेन न सति शब्दज्ञानसामग्रीमात्रजन्ययोग्यपदविषयताशालिनीहापायधारणात्मके मतिज्ञानेऽव्याप्तिः–ईहादिमतिज्ञानभेदस्य श्रुतज्ञानस्य च साक्षरत्वाविशेषेऽपि । 'अयं घटः' इत्यपायोत्तरम् 'अयं घटनामको न वा' इति संशयादर्शनात् तदभावेऽप्यपायेन ग्रहणात् तदाकारोपयोगे 'इदं पदमस्य वाचकम्', 'अयमर्थ एतत्पदस्य वाच्यः' इति पदपदार्थसम्बन्धग्रहस्यापि गौण्येन तज्जनितश्रुतज्ञानस्यैव श्रुतानुसारित्वव्यवस्थितेः । अत एव धारणात्मैव श्रुतहेतुत्वात्–"मइपुव्वं सुयं ।" [नन्दी० २१] इत्यनेन श्रुतत्वावच्छेदेन मतिपूर्वत्व विधिः । 'न मई सुयपुव्विया ।' [नन्दी २४] इत्यनेन च मतित्वसामानाधिकरण्येन श्रुतपूर्वत्वनिषेधोऽभिहितः सङ्गच्छते ।

श्रुतनिश्रिताश्रुतनिश्रितमतिज्ञानयोर्लक्षणम्–

§१६ कथं तर्हि श्रुतनिश्रिताश्रुतनिश्रितभेदेन मतिज्ञानद्वैविध्याभिधानमिति चेत्; उच्यते–स्वसमानाकारश्रुतज्ञानाहितवासनाप्रबोधसमानकालीनत्वे सति श्रुतोपयोगाभावकालीनं श्रुतनिश्रितमवग्रहादिचतुर्भेदम् । उक्तवासनाप्रबोधो धारणाख्यक्षयोपशमोपयुज्यते, श्रुतोपयोगाभावश्च मतिज्ञानसामग्रीसम्पादनाय, उक्तवासनाप्रबोधकाले श्रुतज्ञानोपयोग[४] स्यच्छ्रुतज्ञानस्यैवापत्तेः, मतिज्ञानसामग्र्याः श्रुतज्ञानेऽप्रतिबन्धकत्वेऽपि श्रुतज्ञानसामग्र्याः [illegible] तस्य उत्कटत्वात् । मतिज्ञानजन्यस्मरणस्य मतिज्ञानत्ववत् श्रुतज्ञानजन्यं[५] स्मरणमपि च

१ °देशो दय त । २ तु नोक्ता मु । ३ °कर्मवि° त । ४ °योगे तन्यं° त श्रुतज्ञानोपयोगे श्रुतज्ञा° त । ५ °ज्ञानेऽप्रति° मु त । ६ °समानत्व मु ।

श्रुतज्ञानमध्य एव परिगणनीयम्। उक्तवासनाप्रबोधासमानकालीनं च मतिज्ञानं औत्पत्तिक्यादिचतुर्भेदमश्रुतनिश्रितमित्यभिप्रायेण द्विधाविभागे[1] दोषाभावः। तदिदमाह महाभाष्यकारः–

"पुव्विं सुयपरिकम्मियमइस्स जं संपयं सुयाईयं।
तं निस्सियमियरं पुण अणिस्सियं मइचउक्कं[2] तं॥" [ विशेषा० गा० १६९ ] इति।

§१७ अपूर्वप्रत्यादिप्रभवत्वौत्पत्तिक्यादीनां त्वौत्पत्तिकीत्वमेव आश्रयणीयम्, ऐन्द्रियकश्रुतज्ञानसामान्ये धारणात्वेन, तदिन्द्रियजन्यश्रुते तदिन्द्रियजन्यधारणात्वेनैव वा हेतुत्वात्, प्रागनुपलब्धेऽर्थे श्रुतज्ञानाहितवासनाप्रबोधाभावेन श्रुतनिश्रितज्ञानासम्भवात्। धारणायाः श्रुतहेतुत्व एव च मतिश्रुतयोः लब्धियौगपद्येऽपि उपयोगक्रमः सङ्गच्छते। प्रागुपलब्धार्थस्य चोपलम्भे धारणाहितश्रुतज्ञानाहितवासनाप्रबोधान्वयात् श्रुतनिश्रितत्वमावश्यकम्।

§१८ धारणादिरहितानामेकेन्द्रियादीनां तु आहारादिसंज्ञान्यथानुपपत्त्या अन्तर्जल्पाकारोविवक्षितार्थवाचकशब्दसंस्पृष्टार्थज्ञानरूपं श्रुतज्ञानं क्षयोपशममात्रजनितं त्वाभ्यन्तरमेव।

§१९ आप्तोक्तस्य[3] शब्दस्य छद्मस्थप्रभावेन पदपदार्थशक्तिग्रहानन्तरमाकाङ्क्षायोग्यतादिसाचिव्येन जायमानं तु ज्ञानं स्पष्टधारणाप्रायमेव।

पदार्थादिरूपचतुर्विधवाक्यार्थज्ञानस्य श्रुतरूपैकदीर्घोपयोगत्वसमर्थनम्–

§२० शब्दबोधपरिकरीभूतश्च यावान् प्रमाणान्तरोत्थापितोऽपि बोधः सोऽपि सर्वः श्रुतमेव।

§२१ अत एव पदार्थवाक्यार्थमहावाक्यार्थैदम्पर्यार्थभेदेन चतुर्विधवाक्यार्थज्ञाने ऐदम्पर्यार्थनिश्चयपर्यन्तं श्रुतोपयोगव्यापारात् सर्वत्र श्रुतत्वमेव इत्यभियुक्तैरुक्तमुपदेशपदादौ। तत्र–"सव्वे पाणा सव्वे भूया न हंतव्वा।" इत्यादौ यथाश्रुतमात्रप्रतीतिः पदार्थबोधः। एवं सति हिंसात्वावच्छेदेन अनिष्टसाधनत्वप्रतीतेः आहारविहारदेवार्चनादिकमपि प्राणोपघातहेतुत्वेन हिंसारूपत्वात् अकर्तव्यं स्यादिति वाक्यार्थबोधः। यतनया क्रियमाणा आहारविहारादिक्रिया न पापसाधनानि, चित्तशुद्धिफलत्वात्। अयतनया क्रियमाणं तु *सर्वं हिंसान्तर्भावात् पापसाधनमेवेति महावाक्यार्थबोधः।* 'आज्ञैव धर्मे सारः' इत्यपवादस्थलेऽपि गीतार्थयतनाकृतयोगिकारणपदैः निषिद्धस्याप्यदुष्टत्वम्, विहितक्रियामात्रे च स्वरूपहिंसासम्भवेऽपि अनुबन्धहिंसाया अभावात् न दोषलेशस्यापि अवकाश इत्यैदम्पर्यार्थबोधः।

§२२ एतेषु सर्वेषु एकदीर्घोपयोगव्यापारात् न श्रुतान्यज्ञानप्रसङ्गः, ऐदम्पर्यबोधलक्षणफलव्याप्यत्वेन श्रुतस्य लोकोत्तरप्रामाण्यव्यवस्थितेः। वाक्यस्यापि भविष्यज्ञानबोधजनके 'तथात्वम्युत्पत्तिमतिस्य यावनति व्युत्पत्तिमति पुरुषे न विरम्यव्यापारादिदूषणा

1 द्विविधगते° मु। 2 चउक्कं त। 3 °भ्यन्तरमेव° मु। 4 °भावनं प° मु। 5 °ब्दोत्थापितस्य° त। 6 तथात्वमुत्पत्तिमति पुरुषे अ ब। 7 °क्ती न वि° त।

पदार्थः । सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः 'यत्परः शब्दः स शब्दार्थः' इति नयाश्रयणात् ।

§२३ एतेन–'न हिंस्यात्' इत्यादिनिषेधविधौ विशेषविधिबाधपर्यालोचनया, अनुमितौ व्यापकतानवच्छेदकेनापि विशेषरूपेण व्यापकस्येव, शाब्दबोधे तदतिरिक्त-हिंसात्वेन शक्यतानवच्छेदकरूपेणापि निषेध्यस्य अपेक्षा–इति निरस्तम्; उक्तवाक्यपर्यालोचनस्य प्रकृतोपयोगान्तर्भावे अस्मदुक्तप्रकारस्यैव साम्राज्यात्, तदनन्तर्भावे च तस्य सामान्यवाक्यार्थबोधेन सह मिलनाभावेन विशेषपर्यवसायकत्वासम्भवात् ।

§२४ अव्यवहितद्वित्रक्षणमध्ये एकविशेषबाधप्रतिसन्धानमेव सामान्यवाक्यार्थस्य तदितरविशेषपर्यवसायकमिति कल्पनायां न दोष इति चेत्; न, द्वित्रक्षणाननुगमात्, पटुतरसंस्कारस्य पदपदार्थव्यवधानेऽपि फलोपधायकस्य संस्कारपाटवस्यैव अनुभवस्य अनुसरणीयत्वात् । तत्र पूर्वोक्तेऽर्थे मतिश्रुतसाधारणविचारणोपयोग एवोपयुज्यते । अत एव सामान्यनिषेधज्ञाने विरोधसम्बन्धेन विशेषविधिस्मृतावपि विचारणया तदितरविशेष-पर्यवसानम् ।

§२५ अपि च 'स्वर्गकामो यजेत' इत्यत्र यथा परेषां प्रथमं स्वर्गत्वसामानाधिकरण्येनैव यागकार्यताग्रहः, अनन्तरं च अनुगतानतिप्रसक्तकार्यतावच्छेदकजातिविशेषकल्पनम्, तथा प्रकृतेऽपि हिंसात्वसामानाधिकरण्येन पापजनकत्वबोधे अनन्तरं तद्गततत्त्वावच्छेदकानुगतानतिप्रसक्तरूपकल्पने किं बाधकम्?, सर्वथाव्यवहितेन हिंसासामान्योपस्थितावपि तद्धेतुत्वरूपानुपपन्नकृतविशेषस्य कल्पनीयत्वात् । सैव च कल्पना वाक्यार्थबोधोऽस्ति केति न तदुच्छेदः ।

§२६ किञ्च, पदार्थबोधात् हिंसासामान्ये अनिष्टसाधनत्वभ्रमे आहारविहारादिक्रिया-स्वनिष्टसाधनत्वव्याप्यहिंसात्वारोपेण अनिष्टसाधनत्वारोपलक्षणतर्कात्मक एव वाक्यार्थबोधः । तस्य युक्त्या विपर्ययपर्यवसानात्मको महावाक्यार्थबोधः । ततो हेतुस्वरूपानुबन्धविषय एव हिंसापदार्थ इत्यैदम्पर्यार्थबोधः, इत्येते बोधा अनुभवसिद्धत्वादेव दुर्वाराः ।

श्रुतज्ञानाभ्यन्तरस्य मतिविशेषस्य श्रुतत्वसमर्थनम्–

§२७ श्रुतज्ञानमूलोहादेव श्रुतत्वं मति-ज्ञानमूलोहादेः मतिज्ञानत्ववदेवाभ्युपेयम् । अत एव श्रुतज्ञानाभ्यन्तरीभूतमतिविशेषरेव षट्स्थानपतितत्वं चतुर्दशपूर्वविदामपि आपद्यते सम्प्रदायवादः । तथा चोक्तं कल्पभाष्ये–

"अक्खरलंभेण समा ऊणहिया हुंति मइविसेसेहिं ।
ते वि य मईविसेसा सुयनाणब्भंतरे जाण ॥" [विशेषा० गा० १४१]

§२८ यदि च सामान्यश्रुतज्ञानस्य विशेषपर्यवसायकत्वमेव मतिज्ञानस्य श्रुतज्ञानाभ्यन्तरीभूतत्वम्, उपयोगविच्छेदेऽपि एकोपयोगव्यवहारश्च तत्प्राधान्यादेवेति

१ °कल्पनेऽस्य° अ ब । २ °न्तरे हि । अत त । ३ अनन्तरमनु° त । ४ °चैतु श° त ।

विभाव्यते, तदा पदार्थं बोधयित्वा विरतं वाक्यं वाक्यार्थबोधाय्रिरूपविचारसहकृतमात्मत्वा विशेषं बोधयदव्यापारकत्वमप्यपवृत्तं समर्थं इति मन्तव्यम्। एवं शब्दसंसृष्टार्थग्रहणव्यापृतत्वे पदच्छायसम्य अवग्रहकोहादिवत् तस्य कथं न श्रुतत्वम्?, शब्दसंसृष्टार्थग्रहणहेतुरुपलब्धिविशेषो धारणसमानपरिणामः श्रुतमिति नन्दिवृत्त्यादौ दर्शनात्।

पूर्वगतगाथाया व्याख्यामाश्रित्य श्रुतलक्षणानुगमनम्–

"सोइंदिओवलद्धी होइ सुयं सेसयं तु मइनाणं।
मोत्तूण दव्वसुयं अक्खरलंभो य सेसेसु॥" [विशेषा० गा० ११७]

इति पूर्वगतगाथायामपि अयमेव भावो लभ्यते।

§१९ तथा च अस्यार्थः–श्रोत्रेन्द्रियेणोपलब्धिरेव श्रुतमित्यवधारणम्, न तु श्रोत्रेन्द्रियोपलब्धिः श्रुतमेवेति। अवग्रहादिरूपायाः श्रोत्रेन्द्रियोपलब्धेरपि मतिज्ञानरूपत्वात्। यद्भाष्यकारः–

'सोइंदिओवलद्धी चेव सुयं न उ तई सुयं चेव।
सोइंदिओवलद्धी वि काई जम्हा मइन्नाणं॥" [विशेषा० गा० १२२]

शेषं तु यच्चक्षुरादीन्द्रियोपलब्धिरूपं विज्ञानं तन्मतिज्ञानम्। तु शब्दोऽनुक्तसमुच्चयार्थः। स च अवग्रहेहादिरूपां श्रोत्रेन्द्रियोपलब्धिमपि समुच्चिनोति, यद्भाष्यकारः–

"तुसद्दविसेसणाओ य काइ सोइंदिओवलद्धी वि।
मइ एव जह सोऽवग्गहाइरूवा होंति मइभेया॥" [विशेषा० गा० १२१]

§२० अपवादमाह–मुक्त्वा द्रव्यश्रुतं पुस्तकपत्रकादिन्यस्ताक्षररूपम्। तदाहितायाः शब्दार्थपर्यालोचनात्मिकायाः शेषेन्द्रियोपलब्धेरपि श्रुतत्वात्। अक्षरलाभश्च यः शेषेष्वपीन्द्रियेषु शब्दार्थपर्यालोचनात्मकः, न तु केवलः, तस्येहादिरूपत्वात्, तमपि मुक्त्वेति शेषोपस्कारं व्याख्येयम्।

§२१ नन्वेवं शेषेन्द्रियस्यापि अक्षरलाभस्य श्रुतत्वोक्तेः श्रोत्रेन्द्रियोपलब्धिरेव श्रुतमिति प्रतिज्ञा विशीर्येत। नैवम्, तस्यापि श्रोत्रेन्द्रियोपलब्धिकल्पत्वादिति यद्व।

§२२ श्रोत्रेन्द्रियोपलब्धिपदेन श्रोत्रेन्द्रियजन्यव्यञ्जनाक्षरज्ञानाहिता शाब्दी बुद्धिः, द्रव्यश्रुतपदेन च चक्षुरादीन्द्रियजन्यसंज्ञाक्षरज्ञानाहिता सा, अक्षरलाभपदेन च तदितरि श्रुतज्ञानावरणकर्मक्षयोपशमजनिता बुद्धिर्गृह्यत इति सर्वसाधारणो धारणाद्यायज्ञानाद्धि शब्दसंसृष्टार्थाकारविशेष एवानुगतं लक्षणम्, त्रिविधाक्षरश्रुताभिधानप्रस्तावेऽपि संज्ञाव्यञ्जनयोः द्रव्यश्रुतत्वेन, लब्धिपदस्य च उपयोगार्थत्वेन व्याख्यानात्। तच्चानुगत-

१ °संसृष्टा° मु ब त। २ °संसृष्टा° मु। ३ °हेतुरुपल° ब। ४ नन्दीवृत्तौ तु इत्थं पाठः–"...मन्तुरुपलब्धिरूपेण शब्दार्थसंसृष्टार्थप्रहेतुरुपलब्धिविशेष। 'एवमाकारं वस्तु जलधारणाद्यर्थक्रियासमर्थं ...वाच्यम्' इत्यादिरूपतया प्रधानीकृतत्रिकालसाधारणसमानपरिणामः शब्दार्थपर्यालोचनानुसारी इन्द्रियमनोनिमित्तो-ऽवगमविशेष इत्यर्थः।" एवमेव च पाठः संगतो भाति। तथापि सर्वासु प्रतिषु मुद्रितः पाठः–सं०। ५ नन्दिसूत्र म–टि०। ६ °न्द्रियेणोपलब्धि° मु। ७ ...तस्यति मु ब प। ८ °रूपाणि° मु। °प्यपर ...पर्याय° ब। १० °संस्पृष्टा° मु। ११ °व्याख्याकम् मु।

श्रुतमेव लक्षणमिति । इह गोवृषन्यायेन त्रिविधोपलब्धिरूपमश्रुतज्ञानमिति लक्षणमायाति ।

§२३ अवग्रहादिक्रमवदुपयोगत्वेनापि च मतिज्ञान एव जनकता, न श्रुतज्ञाने, तत्र शाब्दोपयोगत्वेनैव हेतुत्वात् ।

चतुर्णामवग्रहादीनां कार्यकारणभावपरिष्कारः—

§२४ मतिज्ञाने च नानवगृहीतमीहते, नानीहितमपेयते, नानपेतं च धार्यते, इति क्रमनिबन्धनमन्वयव्यतिरेकनियममामनन्ति मनीषिणः । तत्र—अवग्रहस्य ईहायां धर्मिज्ञानत्वेन, तदवान्तरधर्माकारेहायां तत्सामान्यज्ञानत्वेन वा; ईहायाश्च तद्धर्मप्रकारतानिरूपितद्धर्मिनिष्ठसिद्धत्वाख्यविषयतावदपायत्वावच्छिन्ने तद्धर्मप्रकारतानिरूपिततद्धर्मिनिष्ठसाध्यत्वाख्यविषयतावदीहात्वेन, घटाकारावच्छिन्नसिद्धत्वाख्यविषयतावदपायत्वावच्छिन्ने तादृशसाध्यत्वाख्यविषयतावदीहात्वेन वा; धारणायां च अपायस्य समानप्रकारकानुभवत्वेन, विशिष्टभेदे समानविषयकानुभवत्वेन वा कार्यकारणभावः ।

अवग्रहं द्वेधा विभज्य तयोः परस्परं संबन्धविचारः—

§२५. तत्र अवग्रहो द्विविधो व्यञ्जनावग्रहार्थावग्रहभेदात् । तत्र व्यञ्जनेन शब्दादिपरिणतद्रव्यनिकुरम्बेण व्यञ्जनस्य श्रोत्रेन्द्रियादेरवग्रहः सम्बन्धो व्यञ्जनावग्रहः । स च मल्लकप्रतिबोधकदृष्टान्ताभ्यां सूत्रोक्ताभ्यामसंख्येयसमयभावी । तस्याप्यवसायो अव्यक्तज्ञानमात्रा प्रथमसमयेऽप्यंशेन अभवतश्चरमसमये भवनानुपपत्त्या भाष्यकृता प्रतिपादिता । युक्तं चैतत्, निश्चयतोऽविकलकारणस्यैव कार्योत्पत्तिव्याप्यत्वात् । अविकलं च कारणं ज्ञाने उपयोगेन्द्रियमेव । तत्र व्यञ्जनावग्रहकाले उभयसत्त्वात् कथं न स्वकार्यं ज्ञानं जनयेदिति अपटूपयोगस्य कारणांशः ।

§२६ ननु व्यञ्जनावग्रहः प्राप्यकारिणामेवेन्द्रियाणामुक्तो नाप्राप्यकारिणोः चक्षुर्मनसोरिति तत्र कः 'कारणांशो वाच्यः' ? । यदि अर्थावग्रहस्तर्हि सर्वत्र स एवास्त्विति चेत्; न, तत्रापि अर्थावग्रहात् प्राक् लब्धीन्द्रियस्य ग्रहणोन्मुखपरिणाम एव उपयोगस्य कारणांश इत्युपगमात् । न च सर्वत्र एकस्यैव आश्रयणमिति युक्तम्, इन्द्रियाणां प्राप्यकारित्वाप्राप्यकारित्वव्यवस्थाप्रयुक्तस्य ह्रस्वदीर्घकारणांशभेदस्य आगमयुक्त्युपपन्नत्वेन प्रतिबन्दिपर्यनुयोगानवकाशात् ।

§२७ अर्थावग्रहः—सामान्यमात्रग्रहः, यतः 'किञ्चिद्दृष्टं मया, न तु परिभावितम्' इति व्यवहारः । स चैकसामयिकः ।

प्रामाण्यप्रसक्तौ ईहाप्रामाण्यपरीक्षा—

§२८ तत ईहोपयोग आन्तर्मौहूर्तिकः प्रवर्तते । स च सद्भूतासद्भूतविशेषोपादानत्यागाभिमुखवस्तुविचारणात्मकः पर्यन्ते तत्तत्प्रकारेण धर्मिणि साध्यत्वाख्यविषयताव्यापारवान् भवति । अत एव फलभूतो ज्ञानप्रामाण्यसंशयात् विपर्ययसंशयवत् करण-

१ कः कल्पांशो त । २ 'कोऽर्थकारणांश' अ ब । ३ आन्तर्मुहूर्तिकः त ।

प्रवृत्तावपीन्द्रियादिगतगुणदोषसंशयेन विषयसंशयात् इन्द्रियसाद्गुण्यविचारणमपीष्यत एव चन्यते । केवलमभ्यासदशायां झगिति जायमानत्वात् कालसौक्ष्म्येण नोपलक्ष्यते, अनभ्यासदशायां तु वैपरीत्येन स्फुटमुपलक्ष्यत इति मलयगिरिप्रभृतयो वदन्ति ।

§ ३९ एवं सति स्वजन्यापाये सर्वत्र अर्थयाथात्म्यनिश्चयस्य ईहयैव जन्यमानत्वात् "उभयमप्युभयतो परत एव, अंशौ तु स्वतः परतश्च"—इत्याकरसूत्रं विरुध्येत । 'उभयम्'—प्रामाण्यमप्रामाण्यं च 'परत एव' इति कारणगतगुणदोषापेक्षमेत्यर्थः । 'स्वतः परतश्च' इति । संवादकबाधकज्ञानानपेक्षया जायमानत्वं स्वतस्त्वम् । तच्च अभ्यासदशायाम्, केवल क्षयोपशमस्यैव तत्र व्यापारात् । तदपेक्षया जायमानत्वं च परतस्त्वम् । तच्च अनभ्यासदशायाम् । अयं च विभागो विषयापेक्षया, स्वरूपे तु सर्वत्र स्वत एव प्रामाण्यनिश्चय इत्याकरार्थ इति । ईहयैव हि सर्वत्र प्रामाण्यनिश्चयाभ्युपगमे किं संवादकप्रत्ययापेक्षया ? । न खल्वेकं गमकमपेक्षितमिति गमकान्तरमपि अपेक्षणीयम् । न च 'ईहाया बहुविधत्वात् यत्र न करणसाद्गुण्यविचारः तत्रैव उक्तस्वतस्त्वपरतस्त्वव्यवस्था' इति वाच्यम्; ईहायां करणगुणविचारव्यभिचारोपगमे आभ्यासिकापायपूर्वेहायां अनुपलक्ष्यमाणस्यापि तद्विचारस्य नियमकल्पनानुपपत्तेः । न चोक्तविचार ईहायां प्रमाजनकतावच्छेदकः । न तु तत्प्रमितिजनकतावच्छेदक इत्यपि युक्तम्, करणगुणादेव प्रमोत्पत्तौ तस्यास्वतस्त्वात् । न च 'भाविज्ञानस्य असिद्धत्वात् उक्तविचारस्यापीहया तद्गतप्रामाण्याग्रहः' इत्यपि साम्प्रतम्; विचारेण करणसाद्गुण्यग्रहे भाविज्ञानप्रामाण्यग्रहस्यापि संभूतसामग्रीकत्वात् इत्यादि विचारणीयम् ।

प्रामाण्याप्रामाण्ययोः स्वतस्त्वपरतस्त्वाभ्युपगमैकान्ते मीमांसकमतेन दूषणम्—

§ ४० ननु भवतां—सैद्धान्तिकमते उपयोगे—अवग्रहादिचतुष्टयव्याप्यत्वम्, एकत्र वस्तुनि प्राधान्येन सामान्यविशेषोभयावगाहित्वपर्याप्त्याधारत्वं वा; तार्किकमते च प्रमेयाव्यभिचारित्वं—प्रामाण्यं अयोग्यत्वात् अभ्यासेनापि दुर्ग्रहम्, समर्थप्रवृत्त्यनौपयिकत्वेन अनुपादेयं च । पौद्गलिकसम्यक्त्ववतां सम्यक्त्वदलिकान्वितोऽपायांशः प्रमाणम्, क्षायिकसम्यक्त्ववतां च केवलोऽपायांश इति तत्त्वार्थवृत्त्यादिवचनतात्पर्यपर्यालोचनायां तु सम्यक्त्वसमानाधिकरणापायत्वं ज्ञानस्य प्रामाण्यं पर्यवस्यति, अन्यथाऽननुगमात् । तत्र च विशेषणविशेष्यभावे विनिगमनाविरहः । 'ज्ञानं प्रमाणम्' इति वचनं विनिगमकमिति चेत्; तदपि समर्थप्रवृत्त्यौपयिकेन रूपेण विनिगमयेत्, न तु विशिष्टापायत्वेनानौपयिकेन । सम्यक्त्वानुगतत्वेन ज्ञानस्य ज्ञानत्वम्, अन्यथा त्वज्ञानत्वमिति व्यवस्था तु नापायमात्रप्रामाण्यसाक्षिणी, सम्यग्दृष्टिसम्बन्धिनां संशयादीनामपि ज्ञानत्वस्य महाभाष्यकृता परिभाषितत्वात् । न च—'सम्यक्त्वसाहित्येन ज्ञानस्य रुचिरूपत्वं संपद्यते, रुचिरूपं च ज्ञानं प्रमाणमिति सम्यक्त्वविशेषणोपादानं फलवत्' इत्यपि साम्प्रतम्, एतस्य व्यवहारोपयोगित्वेऽपि प्रवृत्त्यनुपयोगित्वात् । न च घटाद्यपायरूपा रुचिरपि सम्यक्त्वमिति व्यवहरन्ति सैद्धान्तिकाः, जीवाजीवादिपदार्थनवकविषयकसमूहालम्बनज्ञानविशेषस्यैव रुचिरूपत्व-

१ °व्यापुर्ने° अ ब । २ °च विशुष्कस्य मु । ३ °व्यापृतत्व मते त । ४ °धीनं नैव° मु अ ब ।

याथात्म्यात्। केवलं मत्यंशस्यादिभागपातमाने' तन्निर्णयो भावसम्यक्त्वम्, सामान्यतस्तु द्रव्यसम्यक्त्वमिति विशेष इति। न च—'घटाद्यपायेऽपि रुचिरूपत्वमिदमेव, सदसद्विशेषणा-विशेषणादिना सर्वत्र ज्ञानाज्ञानव्यवस्थाकल्पनात्, तदेव च प्रामाण्यमप्रत्यूहम्' इति वाच्यम्; अनेकान्तव्यापकत्वादिप्रतिसन्धानाहितवासनानामेव तादृशबोधसम्भवात्, तदन्येषां तु द्रव्यसम्यक्त्वेनैव ज्ञानसम्यक्त्वव्यवस्थितेः। अत एव चरणकरणप्रधानानामपि स्वसमयपरसमयमुक्तव्यापाराणां द्रव्यसम्यक्त्वेन चारित्रव्यवस्थितावपि भावसम्यक्त्वाभावः प्रतिपादितः सम्मतौ महावादिना। द्रव्यसम्यक्त्वं च—"तदेव सत्यं निःशङ्कं यज्जिनेन्द्रैः प्रवेदितम्" इति ज्ञानाहितवासनारूपम्, माषतुषाद्यनुरोधात् गुरुपारतन्त्र्यरूपं वा इत्यन्यदेतत्। तस्मादेव प्रामाण्यप्रकाराः प्रवृत्त्यौपयिकाः'।

§ ४१ तद्वति तत्प्रकारकत्वरूपं ज्ञानप्रामाण्यं तु प्रवृत्त्यौपयिकमवशिष्यते, तस्य च स्वतो ग्राह्यत्वमेवोचितम्। न्यायनयेऽपि ज्ञाने पुरोवर्तिविशेष्यताकत्वस्य रजतत्वादिप्रकारकत्वस्य च अनुव्यवसायग्राह्यतायामविवादात्, 'इमं रजतत्वेन जानामि' इति प्रत्ययात्, तत्र विशेष्यत्वप्रकारत्वयोरेव द्वितीयातृतीयार्थत्वात्। तत्र पुरोवर्ति इदंत्वेन रजतत्वादिनापि चोपनयवशात् भासताम्। न च—'इदंत्वविशिष्टं पुरोवर्तिनि न भासते'—इति वाच्यम्; विशेष्यतायां पुरोवर्तिनः स्वरूपतो भानानुपपत्तेः तादृशविशेषणज्ञानाभावात्, अन्यथा प्रमेयत्वादिना रजतादिज्ञानेऽपि तथाज्ञानापत्तेः, आत्मातिरिक्तस्य किञ्चिद्धर्मप्रकारेणैव भाननियमाच्च। किञ्च, प्रामाण्यसंशयोत्तरम् 'इदं रजतं न वा' इत्येव संशयो, न तु 'रजतमिदं न वा', 'द्रव्यं रजतं न वा' इत्यादिरूप इति यद्विशेष्यकयत्प्रकारकज्ञानत्वावच्छेदेन प्रामाण्यसंशयः तद्धर्मविशिष्टे तत्प्रकारकसंशय इति नियमात् इदंत्वेन धर्मिभानमावश्यकम्, इदंत्वरजतत्वादिना पुरोवर्तिन उपनयमहिम्ना यथार्थज्ञानमनुव्यवसाये दुर्वारमिति किमपरम् अवशिष्यते प्रामाण्ये ग्रहीतुम्?। न च 'एकसम्बन्धेन तद्वति सम्बन्धान्तरेण तत्प्रकारकज्ञानं व्यावृत्तम् येन सम्बन्धेन तत्प्रकारकत्वमेव प्रामाण्यम्, तच्च दुर्ग्रहम्' इति वाच्यम्; व्यवसाये येन सम्बन्धेन रजतत्वादिकं प्रकारः तेन तद्वतोऽनुव्यवसाये भानात्, संसर्गस्य तत्त्वेनैव भानात्। तत्प्रकारत्वं च वस्तुगत्या तत्सम्बन्धावच्छिन्नप्रकारताकत्वमिति प्रकारताघटितत्वेनैव वा तज्ज्ञानम्। अत एव—'इदं रजतमिति तादात्म्यारोपस्थलीयस्य मुख्यविशेष्यता प्रामाण्ये निवेशनीयेति मुख्यत्वस्य दुर्ग्रहत्वम्' इत्युक्तावपि अनवकाशः, वस्तुगत्या मुख्यविशेष्यताया एव निवेशात्, तादात्म्यारोपे आरोप्यांशे भ्रमत्वेन प्रामाण्यसत्त्वेऽपि अर्थ तथ। एतेन—तद्विशेष्यकत्वे सति तत्प्रकारकत्वमात्रं न प्रामाण्यम्, 'इमे रङ्गरजते' 'नेमे रङ्गरजते' इति विपरीतचतुष्कभ्रमसाधारण्यात्, किन्तु तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम्, तच्च प्रथमानुव्यवसाये दुर्ग्रहमित्यपि निरस्तम्। वस्तुगत्या तादृशप्रकारताकत्वस्य सुग्रहत्वादेव, तद्ग्रहे अनुव्यवसायसामग्र्या असामर्थ्यस्य, व्यवसायप्रतिबन्धकत्वस्य वा कल्पनं अभिनिवेशेन स्वबुद्धिविडम्बनामात्रम्, तथाकल्पनायामप्रामाणिकगौरवात्। एतेन विषयतया अनुव्यवसाये व्यवसायस्य प्रामाण्यभाने व्यवसायप्रतिबन्धकल्पनापि

१ °मात्रमेवा° मु। २ °व्यवस्था° त। ३ °तादृशबोधेति मु। ४ °वर्तिन अनुव्यवसाये तत्° अ। ५ °भ्रमतु° अ। ६ °भ्रमे च° मु। ७ °त्व (?) तस्वे° मु। ८ °त्वाचे प्रमा° त।

परास्ता । तत्र तद्विशेष्यकत्वोपस्थितितदभाववद्विशेष्यकत्वाभावोपस्थित्यादीनां उत्ते-जकत्वादिकल्पने महागौरवात्। यदि च विशेष्यत्वादिकमनुपस्थितं न प्रकारः, तदा विशेष्यितासम्बन्धेन रजतत्वादिमत्त्वे सति प्रकारितया रजतत्वादिमत्त्वमेव प्रामाण्यमस्तु। एतज्ज्ञानमेव लाघवात् ग्रहस्यौपयिकम्। तस्माज्ज्ञप्तौ प्रामाण्यस्य स्वतस्त्वमेव युक्तम्। अप्रामाण्यं तु नानुव्यवसायग्राह्यम्, रजतत्वाभाववत्त्वेन पुरोवर्तिनोऽग्रहे तथोपनीत-भानायोगात्, रजतत्वादिमत्तया शुक्त्यादिधीविशेष्यकत्वं रजतत्वप्रकारकत्वं च तत्र गृह्यते, अत एव "भ्रमस्यापि प्रमेत्येव गृह्यते" [तत्त्वचि० प्रत्यक्षखण्ड, पृ० १७४] इति चिन्तामणिग्रन्थः', प्रमेतीत्येव व्याख्यातस्तान्त्रिकैः इत्यप्रामाण्यस्य परतस्त्वमेव। न च 'प्रामाण्यस्य स्वतस्त्वे ज्ञानप्रामाण्यसंशयानुपपत्तिः, ज्ञानग्रहे प्रामाण्यग्रहात् तदग्रहे धर्मिग्रहाभावात्' इति वाच्यम्, दोषात् तत्संशयात् धर्मीन्द्रियसन्निकर्षस्यैव संशयहेतु-त्वात्। प्राक् प्रामाण्याभावोपस्थितौ धर्मिज्ञानात्मक एव वाऽस्तु प्रामाण्यसंशय इति स्वत-स्त्वपरतस्त्वानेकान्तः' प्रामाण्याप्रामाण्ययोः जैनानां न युक्त इति चेत्;–

मीमांसकीयस्य दूषणस्योद्धारः'–

§४२ अत्र ब्रूमः–रजतत्ववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारताकत्वरूपस्य रजतज्ञान-प्रामाण्यस्य 'वस्तुगत्योऽनुव्यवसायेन ग्रहणात् स्वतस्त्वाभ्युपगमेऽप्रामाण्यस्यापि स्वतस्त्वा-पातः', रजतभ्रमानुव्यवसायेनापि वस्तुतो रजतत्वाभाववद्वृत्तिविशेष्यकत्वावच्छिन्नरजतत्व-प्रकारताकत्वस्यैव ग्रहात्। तत्र च अस्माभिरनेकान्तवादिभिरिष्टापत्तिः' कर्तुं शक्यते, द्रव्यार्थतः 'प्रत्यक्षस्य योग्यद्रव्यप्रत्यक्षीकरणवेलायां तद्गतानां योग्यायोग्यानां धर्माणां सर्वेषामभ्युपगमात्, स्वपरपर्यायापेक्षया अनन्तधर्मात्मकं वस्त्विति वासनावत एकज्ञत्वे सर्वज्ञत्वध्रौव्याभ्युपगमात्।

"जे एगं जाणइ से सव्वं जाणइ।
जे सव्वं जाणइ से एगं जाणइ॥" [आचा० १ ३ ४ १२२] त्ति।

पारमर्षस्य इत्थमेव' स्वारस्यव्याख्यानात्। अवोचाम च अध्यात्मसारप्रकरणे

"आसत्तिपाटवाभ्यासस्वकार्यादिभिराश्रयन्।
पर्यायमेकमप्यर्थं वेत्ति भावाद् बुधोऽखिलम्॥" [६ ३०] इति।

न चेयं रीतिरेकान्तवादिनो भवत इति प्रतीच्छ प्रतिबन्दिदण्डप्रहारम्।

अनेकान्तदृष्ट्या प्रामाण्याप्रामाण्ययोः स्वतस्त्वपरतस्त्वसमर्थनम्–

§४३ ननु रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयोरेव ज्ञानोपरि भानम्, अवच्छि-न्नत्वं तु तयोरेव मिथः संसर्गः, एकत्र भासमानयोर्द्वयोर्धर्मयोः परस्परमपि सामानाधिक-रण्येनेव अवच्छिन्नत्वेनापि अन्वयसम्भवात् इत्येवं प्रामाण्यस्य स्वतस्त्वम्, अप्रामाण्यस्य तु न तथात्वम्, रजतत्वाभावस्य व्यवसायेऽस्फुरणेन तद्वद्विशेष्यकत्वस्य प्रतीतुमशक्य-

१ °न्थस्य° ब व। २ °विशेष्यता° मु त ब। ३ वस्तुगतोऽनु° मु। ४ योग्यायोग्यानां धर्माणां सर्वेषां प्रत्यक्षस्य अभ्युपगमात् इत्यर्थः। ५ °णेव स्वारस्या° त। ६ °चारतो मु। ७ °रण्येनैव मु।

त्वात्, ज्ञानग्राहकसामग्र्यास्तु उपस्थितविशेष्यत्वादिग्राहकत्व एव व्यापारात् इत्यव-दोष इति चेत्; न, प्रामाण्यशरीरघटकतावच्छिन्नत्वस्य संसर्गतया भानोपगमे प्रकारत्वेन प्रामाण्यस्य प्रकारत्वासिद्धेः, अंशतः प्रकारतया भानं च स्वाश्रयविशेष्यकत्वावच्छिन्नप्रकार-तासम्बन्धेन रजतत्वस्य ज्ञानोपरि भानेऽपि सम्भवतीति तावदेव प्रामाण्यं स्यात्, अस्त्वेवं ज्ञानग्राहकसामग्र्याः तथाप्रामाण्यग्रह एव सामर्थ्यात्, अत एव नाप्रामाण्यस्य स्वतस्त्वमिति चेत्; न, एवमभ्युपगमे 'अप्रमापि प्रमेतीत्येव गृह्यते' इत्यस्य व्याघातात्, तत्र रजतत्वस्य ज्ञानोपर्युक्तसम्बन्धासम्भवात्, 'कम्बुग्रीवादिमान्नास्ति', 'घटत्वं नास्ति' इत्यादौ सम्बन्धितावच्छेदकावच्छिन्नप्रतियोगिताया इव प्रकृते उक्तसम्बन्धस्य तत्तद्धर्मा-दिघटितनिरूपितावच्छेदकताख्या विलक्षणैव सम्बन्धः सांसर्गिकविषयतेति न दोष इति चेत्; न, तत्रापि लक्षणादिनैव बोध, उक्तप्रतियोगितायास्तु 'घटो नास्ति' इत्यादावेव स्वरूपतः संसर्गत्वम् । उक्तं च मिश्रैः—"अर्थापत्ती भेद देवदत्त इत्यत्र प्रतियोगित्वं स्वरूपत एव स्वस्य इत्येवं समर्थनात् ।"

§ ४४ वस्तुतोऽस्माकं सर्वोऽपि विषयता द्रव्यार्थतोऽखण्डा, पर्यायार्थतश्च सखण्डेति सम्पूर्णप्रामाण्यविषयताशालिबोधो न संवादकप्रत्ययं विना, न वा तादृशाप्रामाण्यविषय-ताकबोधो बाधकप्रत्ययं विना इत्युभयोरनभ्यासदशायां परतस्त्वमेव, अभ्यासदशायां तु क्षयोपशमविशेषसध्रीचीनया तादृशतदवच्छेदकया तथात्वोपग्रहणे स्वतस्त्वमेव । अत एव प्रामाण्यान्तरस्यापि न दुर्ग्रहत्वम्, क्षयोपशमापृथग्भूतदोषोपनीतप्रकारस्यैव अपायेन ग्रह-णात् । तादृशी च प्रामाण्यविषयता नावग्रहमात्रप्रयोज्यत्वेन लौकिकी, नापि पृथगुप-योगप्रयोज्यत्वेन अलौकिकी, किन्तु विलक्षणैवेति न किञ्चिदनुपपन्नं अनन्तधर्मात्मक-वस्त्वभ्युपगमे । अत एव वस्तुसम्बद्धो ज्ञाने ज्ञेयाकारपरिणाम इति विलक्षणप्रामाण्या-कारवादेऽपि न क्षतिः । एवं च भ्रमे अरजतनिमित्तो रजताकारः, संवादानुरूपाकारायाः सम्यग्व्यवहाराकारायाः शुक्तेरेव तदालम्बनत्वात्, प्रमायां तु रजतनिमित्त इत्याकारतथा-त्वस्य[1], परतःस्वतोग्रहाभ्याम् प्रामाण्याप्रामाण्ययोरनेकान्तः" इति प्राचां वाचामपि विमर्शः कान्त एवेति द्रष्टव्यम् ।

§ ४५. न्यायाभियुक्ता अपि यथा अभावलौकिकप्रत्यक्षस्य तद्धर्मस्य प्रतियोगितावच्छेदकत्व-मवगाहमान एव तद्धर्मविशिष्टस्य प्रतियोगित्वमवगाहते तथा ज्ञानलौकिकसाक्षात्कारोऽपि तद्धर्मस्य विशेष्यतावच्छेदकत्वमवगाहमान एव तद्धर्मविशिष्टस्य विशेष्यतादिकमवगाहते" इति इदंत्वविशिष्टस्यैव विशेष्यत्वमवगाहेत, इदंत्वस्य विशेष्यतावच्छेदकत्वात्, न तु रजतत्वादिविशिष्टस्य, रजतत्वादेरतथात्वात् इत्थं नियमस्तु सार्विकः तेनोपनयवशात् अलौकिकसाक्षात्कारेऽपि न क्षतिरिति वदन्तो विनोपनयं प्राथमिकानुव्यवसायस्य

---

१ °विशेष्यित्व° ब । २ °रजतत्वस्य° त । ३ भव लौकिकम् अ ब । ४ तत्त्वोत्पत्त° त । ५ °त्याका-परिरूप° ब । ६ °विलक्षणि° ब । ७ °बोधः प्रभुत्व° त । ८ °सम्पत्ती° अ ब । ९ तादृश्य° ब । १० °ताकत्वमनवात् इति शेषः । ११ °माहत्य इदं त । १२ °चारी इदं ब ।

प्रामाण्याग्राहकत्वमेव आहुः । यदेव च तेषामनुपनयस्य[1] फलं तदेव अस्माकमीहाया[2] इति कृतं प्रसङ्गेन ।

अवग्रहेहयोर्व्यापारांशत्वमपायस्य च फलांशत्वमिति प्रदर्शनम् –

§४६ प्रकृतमनुसरामः । एतावदवग्रहेहारूपौ व्यापारांशौ । ईहानन्तरमपायः प्रवर्तते 'अयं घट एव' इति । अत्र च मासस्यादिजनितक्षयोपशमवशेन यावानीहितो धर्मः तावान् प्रकारी भवति, तेनैकत्रैव 'देवदत्तोऽयं'[3] 'ब्राह्मणोऽयं' 'पाचकोऽयम्' इत्यादिप्रत्ययभेदोपपत्तिः । इत्थं च 'रूपविशेषात् मणिः पद्मरागः'[4] इत्युपदेशोत्तरमपि तथाविधवासनावतो 'रूपविशेषात् अनेन पद्मरागेण भवितव्यम्' इति ईहोत्तरमेव 'अयं पद्मरागः' इत्यपायो युज्यते । उक्तोपदेश[5] पद्मरागपदवाच्यत्वोपमितावेव उपयुज्यते । 'अयं पद्मरागः' इति तु सामान्यावग्रहेहाक्रमेणैवेति नैयायिकानुयायिनः । 'घटः' इत्यपायोत्तरमपि यदा 'किमयं[6] सौवर्णो मार्त्तो वा' इत्यादिविशेषजिज्ञासा प्रवर्तते, तदा प्राच्यापायस्य उत्तरविशेषावग्राहकत्वापेक्षया सामान्यालम्बनत्वात् व्यावहारिकावग्रहत्वम् । ततः 'सौवर्ण एवायम्' इत्यादिरपायः । तत्रापि उत्तरोत्तरविशेषजिज्ञासायां प्राच्यस्य प्राच्यस्य व्यावहारिकावग्रहत्वं द्रष्टव्यम् । जिज्ञासानिवृत्तौ तु अन्त्यविशेषज्ञानमपाय एवोच्यते, नावग्रहः, उपचारकारणाभावात् । अयं फलांशः । कालमानं तु अस्यान्तर्मुहूर्तमेव । सौदामिनीसम्पातजनितप्रत्यक्षस्य चिरमननुवृत्तेर्व्यभिचार इति चेत्; न, अन्तर्मुहूर्तस्यासंख्यभेदत्वात् ।

धारणायाः परिपाकांशत्वमपायपार्थक्यं च –

§४७ अन्त्यविशेषावगमरूपापायोत्तरमविच्युतिरूपा धारणा प्रवर्तते । सापि आन्तर्मुहूर्तिकी[7] । अयं परिपाकांशः । वासनास्मृती तु सर्वत्र विशेषावगमे द्रष्टव्ये । तदाह[8] जिनभद्रगणिक्षमाश्रमणः –

"सामण्णमित्तगहणं नेच्छइओ समयमोग्गहो पढमो ।
तत्तोऽणंतरमीहियवत्थुविसेसस्स जोऽवाओ ॥
सो पुण ईहाऽवायावेक्खाए ओग्गहो त्ति उवयरिओ ।
एस्सविसेसावेक्खं सामण्णं गेण्हए जेणं ॥
तत्तोऽणंतरमीहा तत्तो अवाओ य तव्विसेसस्स ।
इय सामण्णविसेसावेक्खा जावंतिमो भेओ ॥
सव्वत्थेहावाया, निच्छयओ मोत्तुमाइसामण्णं ।
संववहारत्थं पुण, सव्वत्थाऽवग्गहोऽवाओ ॥
तरतमजोगाभावेऽवाओ च्चिय धारणा तदंतम्मि ।
सव्वत्थवासणा पुण भणिया कालंतरे वि सई ॥" त्ति ॥

[विशेषा॰ गा॰ २८२–२८९]

---

१ [illegible] त । २ ईहया साध्यमिति ज्ञानं मु॰, ईहया साध्यमिति ज्ञानं त । ३ देवदत्तोऽयं पाच° मु । ४ पद्मराग इति ज्ञानं नान्त° त । ५ °पेश इत्यत्र वैशा° त । ६ किमयं घटः सौव° मु त । ७ अन्तर्मुहूर्तिकी मु । ८ तदाह भगवान् जिनभ° त ।

§४८ न च—अविच्युतेरपायानतिरेकात् धारणायां मानाभावः, विशेषजिज्ञासानिवृत्त्यवच्छिन्नापायस्य कथञ्चित् भिन्नत्वात्। 'अवगृह्णामि', 'ईहे', 'अवैमि', 'स्थिरीकरोमि' इति प्रत्यया एव च प्रतिप्राण्यनुभवसिद्धा अवग्रहादिभेदे प्रमाणम्। स्मृतिजनकतावच्छेदकत्वेनैव वा अविच्युतित्वस्य धर्मविशेषः कल्प्यते, तदनुपस्थान्यपायस्य स्मृतिजनकतावच्छेदकत्वेऽतिप्रसङ्गात् गौरवादिति धर्मविशेषसिद्धौ धर्मिविशेषसिद्धिरित्यधिकं मत्कृतज्ञानार्णवात् अवसेयम्। तदेवं निरूपितं मतिज्ञानम्। तन्निरूपणेन च श्रुतज्ञानमपि निरूपितमेव। द्वयोरन्योऽन्यानुगतत्वात् तथैव व्यवस्थापितत्वाच्च।

अन्यमतेन श्रुतलक्षणम्—

§४९ अन्ये तु अङ्गोपाङ्गादिपरिज्ञानमेव श्रुतज्ञानम्, अन्यच्च मतिज्ञानमिति। अनयोरपि भजनैव। यदाह वाचकचक्रवर्ती—"एकादीन्येकस्मिन् भाज्यानि त्वाचतुर्भ्यः।" [तत्त्वार्थ० १. ३१] इति ग्रन्थसंस्पृष्टार्थमात्रग्राहित्वेन श्रुतत्वे तु अवग्रहमात्रमेव मतिज्ञानं प्रसज्येत। धारणोत्तरं व्यवमानकारणत्वावच्छेदकत्वकल्पनं तु स्ववासनामात्रविजृम्भितम्। ग्रन्थसंस्पृष्टतया भवतु श्रुतत्वपरिभाषा तु न पृथगुपयोगत्वापादकमिति शाब्दज्ञानमेव श्रुतज्ञानम्, न तु अपरोक्षमिन्द्रियजन्यमपि इत्याहुः।

मतिश्रुतोपयोगयोरभिन्नत्वमिति सिद्धसेनीयमतस्य विशदीकरणम्—

§५० नव्यास्तु श्रुतोपयोगो मत्युपयोगात् न पृथक्, मत्युपयोगेनैव तत्कार्योपपत्तौ तत्पार्थक्यकल्पनाया व्यर्थत्वात्। अत एव शब्दजन्यसामान्यज्ञानोत्तरं विशेषजिज्ञासायां तन्मूलकमत्यपायाभिमुखता न पृथगवग्रहकल्पनागौरवम्, शाब्दसामान्यज्ञानस्यैव तदवग्रहत्वात्। न च—'अज्ञाने शाब्दस्य तन्मात्रतया वा प्रतिबन्धकत्वाभावात् नैवं कल्पना युक्ता' इति वाच्यम्, अज्ञानत्वस्य प्रतिबन्धकतावच्छेदकत्वे प्रतियोगिविधया शब्दमूलमतिज्ञानस्यापि प्रवेशात्, अन्यथा श्रुतस्यान्तरीभूतमतिज्ञानोच्छेदप्रसङ्गात्। किञ्च, शाब्दज्ञानरूपश्रुतस्य अवग्रहादिक्रमवतो मतिज्ञानात् भिन्नत्वोपगमे अनुमानस्मृतितर्कप्रत्यभिज्ञानादीनामपि तथात्वं स्यात् इत्यतिप्रसङ्गः, सांव्यवहारिकप्रत्यक्षत्वाभावस्यापि तेषु तुल्यत्वात्। यदि च अवग्रहादिमत्त्वात् सांव्यवहारिकप्रत्यक्षरूपस्यैव मतिज्ञानस्य ग्राह्यता, अनुमानादिकं तु परोक्षमतिज्ञानमेव सिद्धमित्युच्यते, तर्हि श्रुतशब्दव्यपदेश्यं शाब्दज्ञानमपि परोक्षमतिज्ञानमस्तु, किमधिककल्पनयापि? 'मत्या जानामि', 'श्रुत्वा जानामि' इत्यनुभव एव अनयोर्भेदापादक इति चेत्; न, 'अनुमाय जानामि', 'स्मृत्वा जानामि' इत्यनुभवेनानुमानस्मृत्यादीनामपि भेदापत्तेः। अनुमित्यादिकं मतित्वव्याप्यमेवेति यदीष्यते शाब्दत्वमपि किं न तथा? 'मत्या न जानामि' इति प्रतीतिः तत्र बाधिका इति चेत्; न, नैयायिकानां 'नानुमिनोमि' इति प्रतीतेरिव शाब्दे

१ [illegible] न। २ [illegible] मु न। ३ [illegible] मु न। ४ [illegible] न। ५ [illegible] मु। ६ [illegible] मु। ७ [illegible] न। ८ [illegible] न।

स्या विशेषविषयत्वम् । न च 'निसर्गाधिगमसम्यक्त्वरूपकार्यभेदात् मतिश्रुतज्ञानरूपकारणभेदः' इत्यपि साम्प्रतम्, तत्र निसर्गपदेन स्वभावस्यैव ग्रहणात् । यदु वाचकः —

"शिक्षागमोपदेशश्रवणान्येकार्थिकान्यधिगमस्य ।
एकार्थः परिणामो भवति निसर्गः स्वभावश्च ॥" [ प्रशम० का० २२१ ] इति ।

यत्रापि मतेः श्रुतभिन्नत्वेन ग्रहणं तत्र गोबलीवर्दन्याय एव आश्रयणीयः । तदिदमभिप्रेत्याह महावादी सिद्धसेनः —

"वैयर्थ्यातिप्रसङ्गाभ्यां न मत्यभ्यधिकं श्रुतम् ।" [ निश्चय० १९ ] इति ।

इत्याह ।

## [ २ अवधिज्ञानचर्चा । ]

§५१ अवधिज्ञानत्वं रूपिसमव्याप्यविषयताशालिज्ञानवृत्तिज्ञानत्वव्याप्यजातिमत्त्वम् । रूपिसमव्याप्यविषयताशालिज्ञानं परमावधिज्ञानम्,

"रूवगय लहइ सव्वं ।" [ आव० गा० ४४ ]

इति वचनात् । तद्वृत्तिज्ञानत्वव्याप्या जातिरवधित्वमवधिज्ञानमात्र इति लक्षणसमन्वयः । समव्याप्यत्वमपहाय व्यापकत्वमात्रदाने जगद्व्यापकविषयताकस्य केवलस्य रूपिव्यापकविषयताकत्वनियमात् तद्वृत्तिकेवलत्वमादाय केवलज्ञानेऽतिव्याप्तिः । समव्याप्यत्वदाने तु अरूपिण्यपि व्यभिचारात् केवलज्ञानविषयताया रूप्यव्याप्यत्वात् तन्निवृत्तिः । न च 'परमावधिज्ञानेऽप्यलोके लोकप्रमाणासंख्येयारूप्याकाशखण्डविषयतोपदर्शनात्' असम्भवः; यदि तावत्सु खण्डेषु रूपिद्रव्यं स्यात् तदा पश्येदिति प्रसञ्जनपरत्वेन एव तदुपदर्शन तात्पर्यात् । न च तदंशे विषयबाधेन तस्याप्रामाण्यम्, स्वरूपबाधेऽपि शक्तिविशेषज्ञापनेन फलाबाधात् । एतेन असद्भावस्थापना व्याख्याता बहिर्विषयताप्रसञ्जिका तारतम्येन शक्तिवृद्धिश्च लोकमध्य एव सूक्ष्मसूक्ष्मतरस्कन्धावगाहनफलवतीति न प्रसञ्जनावैयर्थ्यम् । यदुक्तम् —

"वड्ढंतो पुण बाहिं लोगत्थं चेव पासई दव्वं ।
सुहुमयरं सुहुमयरं परमोही जाव परमाणु ॥" [ विशेषा० गा० ६०९ ] इति ।

§५२ अलोके लोकप्रमाणासंख्येयखण्डविषयता अवधेरिति वचने विषयतापदं तच्छक्त्यरूप्यधिकरणताप्रसञ्जकत्वावच्छेदकरूपिविषयतापरमिति न स्वरूपबाधोऽपीति तत्त्वम् । आद्यौ ज्ञानसमव्याप्यत्वविशेषणं ज्ञानत्वमादाय मत्यादावतिव्याप्तिवारणार्थम् । न च संयमप्रत्ययावधिज्ञानमनःपर्यायज्ञानसाधारणजातिविशेषमादाय मनःपर्यायज्ञानेऽतिव्याप्तिः, अवधित्वेन साङ्कर्येण तादृशजात्यसिद्धेः । न च 'पुद्गलाः रूपिणः' इति शास्त्रबोधे

---

१ °न्यैकार्थिकान्य° त । २ °कार्थं प्रकृति° अ ब । ३ °धिविभं तदर्थं भव° त । ४ अवधेराप्यत्वसम ब त । ५ °त्वाधिकरणत्वरूपि° मु त ।

रूपिसमव्याप्यविषयताकेऽतिव्याप्तिः, विषयतापदेन स्पष्टविशेषाकारग्रहणादिति संक्षेपः।

## [ ४ मनःपर्यायज्ञानचर्चा। ]

§५३ मनोमात्रसाक्षात्कारि मनःपर्यायज्ञानम्। न च ताद्दशावधिज्ञानेऽतिव्याप्तिः, मनःसाक्षात्कारित्वेऽवधेः स्कन्धान्तरस्यापि साक्षात्कारित्वेन ताद्दशावधिज्ञानासिद्धेः। न च 'मनस्त्वपरिणतस्कन्धालोचितं बाह्यमप्यर्थं मनःपर्यायज्ञानं साक्षात्करोतीति तस्य मनोमात्रसाक्षात्कारित्वमसिद्धम्' इति वाच्यम्, मनोद्रव्यमात्रालम्बनतयैव तस्य धर्मिग्राहकमानसिद्धत्वात्, बाह्यार्थानां तु मनोद्रव्याणामेव तथारूपपरिणामान्यथानुपपत्तिप्रसूतानुमानत एव ग्रहणाभ्युपगमात्। आह च भाष्यकारः—

"जाणइ बज्झेऽणुमाणेणं ति।" [ विशेषा० गा० ८१४ ]

§५४ बाह्यार्थानुमाननिमित्तकमेव हि तत्र मानसमचक्षुर्दर्शनं अङ्गीक्रियते, यत्पुरस्कारेण तत्र 'मनोद्रव्याणि जानाति पश्यति चैतद्' इति व्यवह्रियते। एकरूपेऽपि ज्ञाने द्रव्याद्यपेक्षक्षयोपशमवैचित्र्येण सामान्यरूपमनोद्रव्याकारपरिच्छेदापेक्षया 'पश्यति' इति, विशिष्टतरमनोद्रव्याकारपरिच्छेदापेक्षया च 'जानाति' इत्यर्थं वा व्याख्यायते। आपेक्षिक सामान्यज्ञानस्यापि व्यावहारिकावग्रहन्यायेन व्यावहारिकदर्शनरूपत्वात्। निश्चयतस्तु सर्वमपि तज्ज्ञानमेव, मनःपर्यायदर्शनानुपदेशादिति द्रष्टव्यम्।

अवधि मनःपर्यायज्ञानयोरभिन्नत्वसमर्थनम्—

§५५ नव्यास्तु बाह्याद्याकारानुमापकमनोद्रव्याकारग्राहकं ज्ञानमवधिविशेष एव, अप्रमत्तसंयमविशेषजन्यतावच्छेदकजातेः अवधित्वव्याप्याया एव कल्पनात् धर्मीति न्यायात्। इत्थं हि 'जानाति पश्यति' इत्यत्र एकोपयोगिद्वयविषयत्वेनैव उपपत्ता लक्षणाकल्पनगौरवमपि परिहृतं भवति। सूत्रे भेदाभिधानं च धर्मभेदाभिप्रायम्। यदि च सङ्कल्पविकल्पपरिणतद्रव्यमात्रग्राहकत्वाद् तद्ग्राहकं ज्ञानमतिरिक्तमिति अत्र निर्बन्धः तदा द्वीन्द्रियादीनामपि इष्टानिष्टप्रवृत्तिनिवृत्तिदर्शनात् संज्ञाविकल्पसङ्कल्पजननपरिणतद्रव्यविषयमपि मनःपर्यायज्ञानमभ्युपगन्तव्यं स्यात्, चेष्टाहेतोरेव मनसः तद्रूपत्वात्। न च तेन द्वीन्द्रियादीनां समनस्कतापत्तिः, कपर्दिकामात्रतया धनिकत्वस्येव, एकया गवा गोमत्त्वस्येव, सूक्ष्मेण मनसा समनस्कत्वस्य आपादयितुमशक्यत्वात्। तदिदमभिप्रेत्योक्तं निश्चयद्वात्रिंशिकायां महावादिना—

"प्रार्थना प्रतिघाताभ्यां चेष्टन्ते द्वीन्द्रियादयः।
मनःपर्यायविज्ञानं युक्तं तेषु न चान्यथा॥" [ निश्चय० १७ ] इति।

§५६ न चैवं ज्ञानस्य पञ्चविधत्वविभागव्याघातात् उत्सूत्रापत्तिः, व्यवहारतश्चतुर्विधत्वेन उक्ताया अपि भाषाया निश्चयतो द्वैविध्याभिधानसमयविवेकेन उत्सूत्राभावादिति दिक्।

---

१ च मनोद्रव्यम्। मनो° त। २ [illegible] त।

## [ ५. केवलज्ञानचर्चा । ]

§५७ सर्वविषयं केवलज्ञानम् । सर्वविषयत्वं च सामान्यधर्मानवच्छिन्ननिखिलधर्मप्रकारकत्वे सति निखिलधर्मिविषयत्वम् । प्रमेयवदिति ज्ञाने प्रमेयत्वेन निखिलधर्मप्रकारके अतिव्याप्तिवारणाय अनवच्छिन्नान्तम्, केवलदर्शने अतिव्याप्तिवारणाय सत्यन्तम्, विशेष्यभागस्तु पर्यायवादभिमतप्रतीत्यसमुत्पादरूपसन्तानविषयकनिखिलधर्मप्रकारकज्ञाननिरासार्थः । वस्तुतो निखिलज्ञेयाकारवत्त्वं केवलज्ञानत्वम् । केवलदर्शनाभ्युपगमे तु तत्र निखिलदृश्याकारवत्त्वमेव, न तु निखिलज्ञेयाकारवत्त्वमिति नातिव्याप्तिः । न च 'प्रतिस्वं केवलज्ञाने केवलज्ञानान्तरवृत्तिस्वप्रागभावकालविनष्टवस्तुसम्बन्धिवर्तमानत्वाद्याकाराभावात्' असम्भवः; स्वसमानकालीननिखिलज्ञेयाकारवत्त्वस्य विवक्षणात् । न च 'तथापि केवलज्ञानप्रथमे यावद्धर्मवृत्तित्वप्रकारकत्वावच्छिन्नविशेष्यतायाः द्वितीयक्षणे नाशः', द्वितीयक्षणवृत्तित्वप्रकारकत्वावच्छिन्नविशेष्यतायाम् उत्पादः, इत्थमेव प्रायसामान्यविशेष्यताध्रौव्यसंभेदेन केवलज्ञाने त्रैलक्षण्यमुपपादितमिति एकदा निखिलज्ञेयाकारवत्त्वासम्भव एव' इति शङ्कनीयम्, समानकालीनत्वस्य क्षणगर्भत्वे दोषाभावात् । अस्तु वा निखिलज्ञेयाकारग्रहणयोग्यतावत्त्वमेव लक्षणम् ।

केवलसिद्धावनुमानोपन्यासः–

§५८ प्रमाणं च तत्र ज्ञानतमत्यन्तोत्कर्षवद्वृत्ति अत्यन्तापकर्षवद्वृत्तित्वात् परिमाणत्ववत् इत्याद्यनुमानमेव । न च अप्रयोजकत्वं ज्ञानतारतम्यस्य सर्वानुभवसिद्धत्वेन तद्विश्रान्तेः अत्यन्तापकर्षोत्कर्षाभ्यां विनाऽसम्भवात् । न च 'इन्द्रियाश्रितज्ञानस्यैव तरतमभावदर्शनात् तस्यैव अन्त्यप्रकर्षो युक्तः' इत्यपि शङ्कनीयम्, अतीन्द्रियेऽपि मनोज्ञाने शास्त्रार्थावधारणरूपे शास्त्रभावनाप्रकर्षजन्ये, शास्त्रातिक्रान्तविषये अतीन्द्रियविषयसामर्थ्ययोगवृत्तिसाधने अभ्यासवशोल्लसितप्रातिभनामधेये च तरतमभावदर्शनात् ।

केवले भावनायाः साक्षाद्धेतुत्वनिरासाय चर्चा–

§५९ नन्वेवं भावनाजन्यमेव प्रातिभवत्केवलं प्राप्तम्, तथा च अप्रमाणं स्यात्, कामातुरस्य सर्वदा कामिनीं भावयतो व्यवहितकामिनीसाक्षात्कारवत् भावनाजन्यज्ञानस्य अप्रमात्वव्यवस्थितेः ।

§६० अथ न भावनाजन्यत्वं तत्र अप्रामाण्यप्रयोजकम्, किन्तु बाधितविषयत्वम्, भावनानपेक्षेऽपि शुक्तिरजतादिभ्रमे बाधादेव अप्रामाण्यस्वीकारात् । प्रकृते च न विषयबाध इति नाप्रामाण्यम् । न च 'व्यवहितकामिनीविभ्रमादौ दोषत्वेन भावनायाः क्लृप्तत्वात् तज्जन्यत्वेनाऽस्याप्रामाण्यम्, बाधितविषयत्वादोषजन्यत्वस्यापि भ्रमत्वप्रयोजकत्वात् । तथा चोक्तं मीमांसाभाष्यकारेण–"यस्य(स्य) च दुष्टं करण(क)रणं यत्र च मिथ्येत्यादि(मिथ्येप्रत्ययः) स एव(वा)समीचीनो प्रत्ययो नान्य इति ।" [शाबर० ११५]

वार्त्तिककारेणाप्युक्तम्–

---

१ 'कामि[?]' मु ।

"तस्माद्दोषस्य कल्प्येयं बाधा बुधैः प्रमाणता ।
सर्वान्यथात्वहेतुत्वदोषज्ञानावपोह्यते ॥" [ श्लोक० सू० २ श्लो० ५२ ] इति ।

अत्र हि दुष्टजन्यत्वमेवाप्रामाण्यप्रयोजकत्वमुक्तम्, तस्मात् बाधाऽभावेऽपि दोषजन्यत्वात् अप्रामाण्यम्' इति वाच्यम्, भावनायाः क्वचिद्दोषत्वेऽपि सर्वत्र दोषत्वानिश्चयात्, अन्यथा शंखपीतत्वभ्रमकारणीभूतस्य पीतद्रव्यस्य स्वविषयकज्ञानेऽपि अप्रामाण्यप्रयोजकत्वं स्यात्, इति न किञ्चिदेतत्, क्वचिदेव क्वचिद्दोष इत्येवाङ्गीकारात्, विषयबाधेनैव दोषजन्यत्वप्रकल्पनाच्च, दुष्टकरणजन्यस्यापि अनुमानादेर्विषयाबाधेन प्रामाण्याभ्युपगमात्, अन्यथा परिभाषामात्रापत्तेः । मीमांसाभाष्य-वार्तिककाराभ्यामपि बाधितविषयत्वव्याप्यत्वेनैव दुष्टकरणजन्यत्वस्य अप्रामाण्यप्रयोजकत्वमुक्तं न स्वातन्त्र्येणेति चेत्;—

§६१ नैवम्, तथापि परोक्षज्ञानजन्यभावनाया अपरोक्षज्ञानजनकत्वासम्भवात् । न हि वह्न्यनुमितिज्ञानं सहस्रकृत्व आवृत्तमपि वह्निसाक्षात्काराय कल्पते । न च 'अभ्यस्यमानं ज्ञानं परमप्रकर्षमासाद्य तथा भविष्यति' इत्यपि शङ्कनीयम्, लङ्घनोदकतापादिवत् अभ्यस्यमानस्यापि परमप्रकर्षायोगात् । न च 'लङ्घनस्यैकस्यावस्थितस्याभावात् अपरापरप्रयत्नस्य पूर्वपूर्वोत्पादितस्थितलङ्घनोत्पादन एव व्यापारात् यावल्लङ्घयितव्यं तावल्लङ्घनाबाधे श्लेष्मादिना बाध्यमानो लङ्घयितुं शक्नोति 'अभ्यासासादितश्लेष्मक्षयपटुभावमोचनकर्तुं शक्नोतीति तत्र व्यवस्थितोत्कर्षता । उदकतापे तु अतिशयेन क्रियमाणे तदाश्रयस्यैव क्षयात् न तत्रापि अधिरूढतापविशेषोऽन्त्योत्कर्षः । विज्ञानं तु संस्काररूपं ज्ञानपरावर्तनाद्यन्यथानुपपत्त्योत्तरत्रापि अनुवर्तत इति तत्र अपरापरयत्नानां सर्वेषामुपयोगात् अनन्तोत्कर्षो युक्त इति तद्वत् भावनाज्ञानेनापरोक्षं केवलज्ञानं जन्यते' इति टीकाकृदुक्तमपि विचारसहम्, तस्य प्रमाणान्तरत्वापत्तेः, मनो' यदसाधारणमिति' न्यायात्, अन्यथा चक्षुरादिभ्यासिञ्चनादिसहकृतस्य मनस एव सर्वत्र प्रामाण्यसम्भवे प्रमाणान्तरोच्छेदापत्तेः, चक्षुरादीनामेव(वाऽ) साधारण्यात् प्रामाण्यमित्यभ्युपगमे भावनायामपि तथा वक्तुं शक्यत्वात् । एवं च परोक्षभावनाया अपरोक्षज्ञानजनकत्वं तस्याः प्रमाणान्तरत्वं च अन्यत्राप्यदृष्टचरं कल्पनीयमिति महागौरवमिति चेत्;—

§६२ अनुक्तोपालम्भ एषः, प्रकृष्टभावनाजन्यत्वस्य केवलज्ञानेऽभ्युपगमवादेनैव टीकाकृतोक्तत्वात् । वस्तुतस्तु तदन्यावारककर्मावरणक्षयादेव केवलज्ञानोत्पत्तिरित्येव सिद्धान्तात् ।

योगजधर्मजत्वनिषेधेनावरणक्षयजत्वसिद्धिः—

§६३ यैरपि योगजधर्मस्य अतीन्द्रियज्ञानजनकत्वमभ्युपगम्यते, तैरपि प्रतिबन्धकपापक्षयस्य द्वारत्वमवश्यमाश्रयणीयम्, सति प्रतिबन्धके कारणस्य अकिञ्चित्करत्वात् । कार्यं

१ °वाप्तमेवैषी त । २ °प्रत्यक्ष° मु । ३ °अभ्यस्यमानविरोधि° त । ४ °मपि युक्तं तस्य त । ५ अव-यव° अ ब । ६ °भित्यादि व्यापार अ । ७ °रोग कर्मेव तापा° त । ८ कर्मनिवृत्त्या तस्याः त ।

तैर्योगजधर्मस्य मनःप्रत्यासत्तित्वम्, तेन सन्निकर्षेण निखिलद्रव्यार्थाद्ये निरवच्छिन्नप्रकारताकज्ञाने, षोडशपदार्थविषयकषिलक्षणमानसज्ञाने वा तत्त्वज्ञाननामधेये मनसः करणत्वम्, चाक्षुषादिसामग्रीकाल इव लौकिकमानससामग्रीकालेऽपि तादृशतत्त्वज्ञानानुत्पत्ते तत्त्वज्ञानाख्यमानसे तदितरमानससामग्र्याः प्रतिबन्धकत्वम्, तत्त्वज्ञानरूपमानससामग्र्याश्च प्रणिधानरूपविजातीयमनःसंयोगघटितत्व कल्पनीयमिति अनन्तमप्रामाणिकक-[1] ल्पनागौरवम् । अस्माकं तु दुरितक्षयमात्रं तत्र कारणमिति लाघवम् । अत एवेन्द्रियनो-[2] इन्द्रियज्ञानासाधिम्येन केवलमसहायमिति भाष्ये व्याख्यायते । स चावरणाख्यदुरितक्षयो[3] भावनाप्रकर्षात् तारतम्येनोपचीयमानस्यात्यन्तप्रकर्षात् अत्यन्तप्रकर्षमनुभवतीति किमनुपपन्नम् ? । तदाह अकलङ्को(समन्तभद्रो)ऽपि—

"दोषावरणयोर्हानिर्निःशेषास्त्यतिशायनात् ।
क्वचिद्यथा स्वहेतुभ्यो बहिरन्तर्मलक्षयः ॥" [ आप्त० का० ४ ] इति ।

§६४ न च 'निम्बाद्यौषधोपयोगात् तरतमभावोपचीयमानस्यापि श्लेष्मणो नात्यन्तिकक्षयः' इति व्यभिचारः, तत्र निम्बाद्यौषधोपयोगोत्कर्षनिष्ठाया एव आपादयितुमशक्यत्वात्, तदुपयोगेऽपि श्लेष्मपुष्टिकारणानामपि सदैवासेवनात्, अन्यथा औषधोपयोगाधारस्यैव विनाशप्रसङ्गात् । चिकित्साशास्त्रं हि उद्रिक्तधातुदोषसाम्यमुद्दिश्य प्रवर्तते, न तु तस्य निर्मूलनाशम्, अन्यतरदोषात्यन्तक्षयस्य मरणाविनाभावित्वादिति द्रष्टव्यम् ।

<u>रागादेः केवलज्ञानावरकत्वसमर्थनम्</u>—

§६५ रागाद्यावरणापाये सर्वज्ञज्ञानं वैशद्यभाग् भवतीत्यत्र च न विवादो रजोनीहाराद्यावरणापाये वृक्षादिज्ञाने तथा दर्शनात् । न च 'रागादीनां कथमावरणत्वम् ?, कुड्यादीनामेव पौद्गलिकानां तथात्वदर्शनात्' इति वाच्यम्, कुड्यादीनामपि प्रातिभासावरणाकारकत्वात्, ज्ञानविशेषे तेषामावरणत्वस्य अतीन्द्रियज्ञाने रागादीनामपि तथात्वसमन्वयव्यतिरेकाभ्यामेव सिद्धम्, रागाद्यपचये योगिनामतीन्द्रियानुभवसम्भवात् । पौद्गलिकत्वमपि द्रव्यकर्मानुगमेन तेषां नासिद्धम्, स्वविषयग्रहणक्षमस्य ज्ञानस्य तदग्राहकतायाः [4]विशिष्टद्रव्यसम्बन्धपूर्वकत्वनियमात् पीतहृत्पूरपुरुषज्ञाने तथा दर्शनात् इति ध्येयम् ।

<u>रागादेः कर्मजत्वसिद्धये कफादिजत्वस्य निरासः</u>—

§६६ <u>बार्हस्पत्यास्तु</u>—'रागादयो न लोभादिकर्मोदयनिबन्धनाः किन्तु कफादिप्रकृतिहेतुकाः । तथाहि—कफहेतुको रागः, पित्तहेतुको द्वेषः, वातहेतुकश्च मोहः । कफादयश्च सदैव सन्निहिताः, शरीरस्य तदात्मकत्वात्, ततो न सार्वज्ञ्यमूलवीतरागत्वसम्भवः' इत्याहुः । तदयुक्तम्, रागादीनां व्यभिचारेण कफादिहेतुकत्वायोगात्, दृश्यन्ते[5] हि वातप्रकृतेरपि रागद्वेषौ, कफप्रकृतेरपि द्वेषमोहौ, पित्तप्रकृतेरपि मोहरागाविति । एवमेकस्याः प्रकृतेः पृथक् सर्वदोषजननशक्त्युपगमे च सर्वेषां समरागादिमत्त्वप्रसङ्गात् । न च

१ °कल्पनागौरवम्° मु अ ब । २ °एवेन्द्रियज्ञानाख्य° मु । ३ °ज्ञानोऽपि सिध्यन्° मु । ४ °भावेतरौ° अ ब ।
५ मिश्रप्रकृतस्य° मु अ ब । ६ दृश्यते मु अ ब ।

'सत्त्वयोग्यकर्मविपाकादिदोषजनककषायवान्तरपरिणतिविशेषस्य प्रतिप्राणिकल्पनात् नायं दोषः' इति वाच्यम्, तदपेक्षान्तरस्य आत्मावच्छिन्नहेतुगवेषणायामपि कर्मण्येव विश्रामात् । किञ्च अभ्यासजनितप्रसरत्वात् प्रतिसंख्याननिवर्तनीयत्वाच्च न कफादिहेतुकत्वं रागादीनाम् ।

§६७ एतेन शुक्रोपचयहेतुक एव रागो नान्यहेतुक इत्याद्यपि निरस्तम्, अत्यन्तस्त्री-सेवापरस्य क्षीणशुक्रस्यापि रागोद्रेकदर्शनात्, शुक्रोपचयस्य सर्वस्त्रीसाधारणाभिलाषजनकत्वेन कस्यचिदेव रागोद्रेक इत्यस्यानुपपत्तेश्च । न च असाधारण्ये रूपमेव हेतुः, तद्रहितायामपि कस्यचिद्रागदर्शनात् । न च तत्र उपकार एव हेतुः, इत्येनापि विप्लुतायां राग-दर्शनात् । तस्मात् अभ्यासदर्शनजनितोपचयपरिपाकं कर्मैव विचित्रस्वभावतया तदा तदा तत्तत्सहकार्यपेक्षं तत्र तत्र रागादिहेतुरिति प्रतिपत्तव्यम् ।

§६८ एतेन पृथिव्यम्बुभूयस्त्वे रागः, तेजोवायुभूयस्त्वे द्वेषः, जलवायुभूयस्त्वे मोह इत्यादयोऽपि प्रलापा निरस्ताः, तस्य विषयविशेषापक्षपातित्वादिति दिक् । कर्मभूतानां रागादीनां सम्यग्ज्ञानक्रियाभ्यां क्षयेण वीतरागत्वं सर्वज्ञत्वं च अनाविलमेव ।

नैरात्म्यभावनानिरासाय क्षणभङ्गे मिथ्यात्वोक्तिः–

§६९ शौद्धोदनीयास्तु–'नैरात्म्यादिभावनैव रागादिक्लेशहानिहेतुः, नैरात्म्यभावनयैव आत्मात्मीयाभिनिवेशाभावेन रागद्वेषोच्छेदात् संसारमूलनिवृत्तिसम्भवात्, आत्म-भावतौ च तस्य नित्यत्वेन तत्र स्नेहात् तन्मूलतृष्णादिना क्लेशानिवृत्तेः । तदुक्तम्–

"यः पश्यत्यात्मानं तत्रास्याहमिति शाश्वतः स्नेहः ।
स्नेहात्सुखेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते ॥
गुणदर्शी परितृष्यन्ममेति तत्साधनान्युपादत्ते ।
तेनात्माभिनिवेशो यावत्तावच्च संसारः ॥" [प्रमाणवा० २ २१७,२१८] इति ।

§७० ननु यद्येवं आत्मा न विद्यते, किन्तु पूर्वापरक्षणत्रुटितानुसन्धानाः पूर्वोत्तरे प्रतिभासा ज्ञानक्षणा एव तथा तथा उत्पद्यन्त इत्यभ्युपगमस्तदा परमार्थतो न कश्चिदुपकार्योपकारकभाव इति कथमुच्यते 'भगवान् सुगतः करुणया सकलसत्त्वोपकाराय देशनां कृतवान्' इति । क्षणिकत्वमपि यद्येकान्तेन, तर्हि तत्त्वबोधी क्षणोऽनन्तरं विनष्टः तत् 'न कदाचनापि अहं भूयो भविष्यामि' इति जानानः किमर्थं मोक्षाय यतत इति ?। अत्रोच्यते–भगवान् हि प्राचीनावस्थायां सकलमपि अशुचिरूपं पश्यंस्तदुद्दिधीर्षया नैरात्म्यक्षणि-कत्वादिकमवगच्छन्नपि तेषामुपकार्यसत्त्वानां निष्क्लेशक्षणोत्पादनाय प्रयत्ते, ततो बाध-सत्त्वभवस्थायाश्रयः समुत्पन्नकेवलज्ञानः पूर्वाहितकृपाविशेषसंस्कारात् कृतार्थोऽपि देश-नायां प्रवर्तते, अभिमतस्थावस्थायोभीष्टसन्ततिगतविशिष्टक्षणोत्पत्तये मुमुक्षवः प्रवर्तन्ते, इति न किमपि असुपपन्नम्' इत्याहुः ।

§७१ तदतिस्थविरानधिक्षिप्तम् । आत्माभावे बन्धमोक्षाद्येकाधिकरणतायोगात् । न

१ °क्षणा तथा तद्र त्र ब ।

च सन्तानापेक्षया समाधिः, तस्यापि क्षणानतिरेके एकत्वासिद्धेः, एकत्वे च द्रव्यस्यैव नामान्तरत्वात्, सजातीयक्षणप्रबन्धरूपे सन्ताने च न कारकव्यापार इति समीचीनं मुमुक्षुप्रवृत्त्युपपादनम् ।

§७२ अथ अक्लिष्टक्षणे 'अक्लिष्टक्षणत्वेनोपादानत्वमिति सजातीयक्षणप्रबन्धोपपत्तिः । बुद्धदेशितमार्गे तु तत्प्रयोजकत्वज्ञानादेव प्रवृत्तिरिति चेत्; न, एकान्तवादे अनेन रूपेण[1] निमित्तत्वं अनेन रूपेण च उपादानत्वमिति विभागस्यैव दुर्वचत्वात् । अक्लिष्टक्षणे अक्लिष्टक्षणत्वेनैव उपादानत्वे आद्याक्लिष्टक्षणस्यानुत्पत्तिप्रसङ्गात्, अन्त्यक्लिष्टक्षणसाधारणस्य हेतुतावच्छेदकस्य कल्पने च क्लिष्टक्षणजन्यतावच्छेदकेन साङ्कर्यम्, अन्त्यजनकक्षणप्रबन्धकोटौ एकैकक्षणप्रवेशपरित्यागयोर्विनिगमकाभावात् । एतेन इतरव्यावृत्त्या शक्तिविशेषेण वा जनकत्वमित्यपि अपास्तम् । न च 'एतदनन्तरमहं उत्पन्नं एतस्य चाहं जनकम्' इति अवगच्छति क्षणरूपं ज्ञानमिति न मन्मते कार्यकारणभावः, नापि तदवगमः, तयोः पाषितक्रमभवनमेतत् एकसन्ततिपतितत्वात् एकाधिकरणं बन्धमोक्षादिकमिति । एतेन उपादेयोपादानक्षणानां परस्परं वास्यवासकभावात् उत्तरोत्तरविशिष्टविशिष्टतरक्षणोत्पत्तेः मुक्तिसम्भव इत्यपि अपास्तम्, युगपद्भाविनामेव तिलकुसुमादीनां वास्यवासकभावदर्शनात् । उक्तं च –

"वास्यवासकयोश्चैवमसाहित्यान्न वासना ।
पूर्वक्षणैरनुत्पन्नो वास्यते नोत्तरक्षणः ॥" [ श्लोक० निराल० श्लो० १८२ ] इति ।

कल्पितक्षणिकसन्तानादिविषयैव मोक्षोपाये सौगतानां प्रवृत्तिः, तस्यैव च सुगतदेशना इत्यभ्युपगमे च तेषां मिथ्यादृष्टित्वम्, तत्कल्पितमोक्षस्य च मिथ्यात्वं स्फुटमेव । अधिकं लतायाम् ।

## [ ६ ब्रह्मज्ञानसमीक्षा । ]

### अखण्डब्रह्मज्ञानपरकमधुसूदनमतनिरासः –

§७३ एतेन अखण्डाद्वयानन्दैकरसब्रह्मज्ञानमेव केवलज्ञानम्, तत एव च अविद्यानिवृत्तिरूपमोक्षाधिगम इति वेदान्तिमतमपि निरस्तम्, बाध्यविषयाभावेन तज्ज्ञानस्य मिथ्यात्वात् । कीदृशं च ब्रह्मज्ञानमज्ञाननिवर्तकमभ्युपेयं देवानांप्रियेण ? । न केवलचैतन्यम्, तस्य सर्वदा सत्त्वेन अविद्याया नित्यनिवृत्तिप्रसङ्गात्, ततश्च तन्मूलसंसारोपलम्भासम्भवात् सर्वशास्त्रानारम्भप्रसङ्गात्, अनुभवविरोधाच्च । नापि वृत्तिरूपम्, वृत्तेः सत्यत्वे तत्कारणान्तःकरणाविद्यादेरपि सत्यस्य आवश्यकत्वेन तथा तभिन्नपरक्षस्यतया सर्ववेदान्तार्थविप्लवापत्तेः । मिथ्यात्वे च कथमज्ञाननिवर्तकता ? । नहि मिथ्याज्ञानमज्ञाननिवर्तकं दृष्टम्, स्वप्नज्ञानस्यापि तथात्वप्रसङ्गात् ।

§७४ न च 'सत्यस्यैव चैतन्यस्य प्रमाणजन्यापरोक्षान्तःकरणवृत्त्यभिव्यक्तस्य अज्ञानि-

---

१ अक्लिष्टक्षणत्वेनैव त ।

धर्मकत्वात्, वृत्तेश्च कारणतावच्छेदकत्वेन दण्डत्वादिवत् अन्यथासिद्धत्वेन कारणत्वानङ्गीकारात्, अवच्छेदकस्य कल्पितत्वेऽपि अवच्छेद्यस्य वास्तवत्वं न विहन्यते, यद्रजतत्वेन भातं तच्छुक्तिद्रव्यमितिवत्, तार्किकैरपि आकाशस्य शब्दग्राहकत्वे कर्णशष्कुलीसम्बन्धस्य कल्पितस्यैव अवच्छेदकत्वाङ्गीकारात्, संयोगमात्रस्य निरवयवे नभसि सर्वात्मना सत्त्वेनातिप्रसञ्जकत्वात्, मीमांसकैश्च कल्पितह्रस्वत्वदीर्घत्वादिधर्मावच्छिन्नानामेव वर्णानां यथार्थज्ञानजनकत्वोपगमात्, ध्वनिधर्माणां ध्वनिगतत्वेनैव मानात्, वर्णानां च विभूनामानुपूर्वीविशेषाभावादतिप्रसङ्गात् वर्णनिष्ठत्वेन ह्रस्वत्वादिकल्पनस्य तेषामावश्यकत्वात्, तद्वदस्माकमपि कल्पितावच्छेदकोपगमे को दोषः' इति मधुसूदनतपस्विनोऽपि वचनं विचारसहम्, मिथ्यादृष्टान्तस्य सम्यग्धर्मग्रहणानौचित्यात्, नैयायिकमीमांसकैकस्थलेऽपि यत्नत्वधर्मास्मदैकमत्यस्वीकारे कल्पितावच्छेदकत्वविडम्बनाया अप्रसरात्, विस्तरेणोपपादितं चैतत् संमतिवृत्तौ —

§७५. न चोक्तरीत्या वृत्तेरवच्छेदकत्वमपि युक्तम्, प्रतियोगितया अज्ञाननिवृत्तौ सामानाधिकरण्येन समानविशेष्यकसमानप्रकारकज्ञानस्यैव त्वन्मते हेतुत्वस्य युक्तत्वात् । अत एव स्फुटमुक्तं तपस्विना सिद्धान्तबिन्दौ — "द्विविधमावरणम् — एकमसत्त्वापादकमन्तःकरणावच्छिन्नसाक्षिनिष्ठम्, अन्यत् अभानापादकं विषयावच्छिन्नचैतन्यनिष्ठम्, 'घटमहं न जानामि' इत्युभयावच्छेदानुभवात् । आद्यं परोक्षापरोक्षसाधारणप्रमामात्रेण निवर्तते अनुमितेऽपि वह्न्यादौ नास्तीति प्रतीत्यनुदयात् द्वितीयं तु साक्षात्कारेणैव निवर्तते यदाश्रयं यदाकारं ज्ञानं तदाश्रयं तदाकारमज्ञानं नाशयतीति नियमात्" [पृ० २९१] इत्यादि । तत्किमिदानीं तपस्विनस्तदेव विस्मृतम् ? येनोक्तवृत्तेरवच्छेदकत्वेन अन्यथासिद्धिमाह । एवं हि घटत्वादीनामपि द्रव्यविशिष्टत्वापन्नत्वेनैव हेतुतां वदतो वदने कः पिदध्यात् ? । अनयैव दिशा — 'चैतन्यनिष्ठायाः प्रमायाः अन्यापरोक्षान्तःकरणवृत्तेरेव अज्ञाननाशकत्वाङ्गीकारेऽपि न दोषः, पारमार्थिकत्वस्याभावेऽपि व्यावहारिकत्वस्याङ्गीकारात् । न च स्वप्नादिवन्मिथ्यात्वापत्तिः, स्वरूपतो मिथ्यात्वस्य अप्रयोजकत्वात्, विषयतो मिथ्यात्वस्य च बाधाभावादसिद्धेः, धूमभ्रमजन्यवह्न्यनुमितेरपि अबाधितविषयतयाऽप्रामाण्यानङ्गीकारात्, कल्पितेनापि प्रतिबिम्बेन वास्तवबिम्बानुमानप्रामाण्यात्, स्वप्नार्थस्यापि अरिष्टादिसूचकत्वात्, क्वचिद्दुःस्वप्नभावे जागरेऽपि अनुवृत्तेरबाधाच्च' इति तपस्विनोक्तम् — इति चेत्; एतदपि अविचारितरमणीयम्, त्वन्मते स्वप्नजागरयोर्व्यवहारविशेषस्यापि दुर्वचत्वात्, बाधाभावेन प्रमाया इव घटादेरपि परमार्थसत्त्वस्य दुष्परिहरत्वात्, प्रपञ्चासत्यत्वे बन्धमोक्षादेरपि तथात्वेन व्यवहारस्य एव उच्छेदापातात् ।

त्रिविधाज्ञानशक्तिनिवृत्तिप्रक्रियायाः निरासः —

§७६ एतेन अज्ञाननिष्ठाः परमार्थव्यवहारप्रतिभाससत्त्वप्रतीत्यनुकूलास्तिस्रः शक्तयः कल्प्यन्ते, मायया प्रथमे पारमार्थिकसत्त्वप्रतीतिः, अत एव नैयायिकादीनां तथात्व-

१ न हि दृश्यते इ मु। २ 'नाच न मु°। ३ 'धर्मोपेत्य' मु। ४ अत्रापरं चक्ष' मु।

पगमः, सा च श्रवणाद्यभ्यासपरिपाकेन निवर्तते, ततो द्वितीयया शक्त्या व्यावहारिक सत्त्वं प्रपञ्चस्य प्रतीयते, वेदान्तश्रवणाद्यभ्यासवन्तो हि नेमं प्रपञ्चं पारमार्थिकं पश्यन्ति, किन्तु व्यावहारिकमिति, सा च तत्त्वसाक्षात्कारेण निवर्तते, तत' तृतीयया शक्त्या प्रातिभासिकसत्त्वप्रतीतिः क्रियते, सा च अन्तिमतत्त्वबोधेन सह निवर्तते, पूर्वपूर्वशक्ते रुत्तरोत्तरशक्तिकार्यप्रतिबन्धकत्वाच्च न युगपत्कार्यत्रयप्रसङ्ग', तथा च एतदभिप्राया श्रुतिः—"तस्याभिध्यानाद् योजनात् तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" [श्वेता० १ १० ] इति । अस्या अयमर्थः—तस्य परमात्मनोऽभिध्यानादभिमुखत्वात् ध्यानाच्छ्रवणाद्यभ्यासपरिपाकादिति यावत्, विश्वमायाया विश्वारम्भकाविद्याया निवृत्तिः, आद्यशक्तिनाशेन विशिष्टनाशात्, युज्यते अनेनेति योजनं तत्त्वज्ञानं तस्मादपि विश्वमायानिवृत्तिः, द्वितीय शक्तिनाशेन विशिष्टनाशात्, तत्त्वभावो विदेहकैवल्यः अन्तिमः साक्षात्कार इति यावत्, तस्मादन्ते प्रारब्धक्षये सह तृतीयशक्त्या विश्वमायानिवृत्तिः । अभिध्यानयोजनाभ्यां शक्तिद्वयनाशेन विशिष्टनाशापेक्षया भूयः शब्दोऽभ्यासार्थक इतीत्यादि निरस्तम्, अभिध्यानादेः मात्रपरमार्थसत्त्वादौ परमार्थसत्त्वादिप्रतीत्यभ्युपगमे अन्यथाख्यात्यापातात् ।

§७७ न च 'तत्तच्छक्तिविशिष्टाज्ञानेन परमार्थसत्त्वादि जनयित्वैव प्रख्याप्यत इति नायं दोषः' इति वाच्यम्, साक्षात्कृततत्त्वस्य न किमपि वस्त्वज्ञातमिति प्रातिभासिक सत्त्वोत्पादनव्यापाराभावात् । ब्रह्माकारवृत्त्या ब्रह्मविषयत्वेव अज्ञानस्य नाशिता, तृतीय शक्तिविशिष्टं तु अज्ञानं यावत्प्रारब्धमनुवर्तत एवेति ब्रह्मातिरिक्तविषये प्रातिभासिकसत्त्वोत्पादनादविरोध इति चेत्, न, धर्मिसिद्ध्यसिद्धिभ्यां व्याघातात्, विक्षेपोपरागेण अज्ञाते तदुपगमे च ब्रह्मण्यपि प्रातिभासिकमेव सत्त्वं स्यात्, तस्मिन् कस्यचिदज्ञानस्य स्थितौ विदेहकैवल्येऽपि तदवस्थितिशङ्कया सर्वाज्ञाननिवृत्तौ मुक्तावनाश्वासप्रसङ्गाच्च ।

§७८ अथ दृष्टिसृष्टिवादे नेयमनुपपत्तिः, तन्मते हि वस्तुसत् ब्रह्मैव, प्रपञ्चस्तु प्रातिभासिक एव, तस्य च अभिध्यानादेः प्राक् पारमार्थिकसत्त्वादिना प्रतिभासः पारमार्थिक सदाद्याकारज्ञानाभ्युपगमादेव उपपाद इति चेत्, न, तस्य प्राचीनोपगतस्य सौगतमतप्राय त्वेन नव्यैरुपेक्षितत्वात्, व्यवहारवादस्यैव सैद्धान्तिकत्वात्, व्यवहारवादे च व्यावहारिकं प्रपञ्चं प्रातिभासिकत्वेन प्रतीयतां तत्त्वज्ञानिनामत्यन्तभ्रान्तत्वं दुर्निवारमेव । अथ व्यावहारिकस्यापि प्रपञ्चस्य तत्त्वज्ञानेन बाधितस्यापि प्रारब्धवशेन बाधितानुवृत्त्या प्रतिभासः तृतीयस्याः शक्तेः कार्यम्, तेन बाधितानुवृत्त्या प्रतिभासानुकूला तृतीया शक्तिः प्रातिभासिकसत्त्वसम्पादनपटीयसी शक्तिरुच्यते, सा च अन्तिमतत्त्वबोधेन निवर्तत इत्यय मदोष इति चेत्, न, बाधितं हि त्वन्मते नाशितम्, तस्यानुवृत्तिरिति वदतो व्याघातात् । बाधितत्वेन बाधितत्वावच्छिन्नतया वा प्रतिभास' तत्त्वज्ञप्रारब्धकार्यमिति चेत्; तर्हि तृतीया शक्तिर्व्यर्था, यावद्विक्षेपाणां बाधितत्वे तेषां तथाप्रतिभासस्य तार्तीयं विनानुपपत्तेश्च,

१ °न्तिमतत्त्वबोध° त ।   २ °विशिष्टाज्ञानेन अ ब मु ।   ३ °व्यावर्तक अ ब ।   ४ °भूम्यन्तृतीय अ ब ।
५ अन्तैत्वाभ्युपगमे विना मु त ।

द्वितीयशक्तिविशिष्टाज्ञाननाशात् सञ्चितकर्म सत्कार्यं च नश्यति, ततस्तृतीयशक्त्या प्रारब्धकार्ये दग्धरज्जुस्थानीया बाधितावस्था जन्यते, इयमेव बाधितानुवृत्तिरिति चेत्, न, एवं सति घटपटादौ तत्त्वज्ञस्य न बाधितसत्त्वधीः, न वा व्यावहारिकपारमार्थिकसत्त्वधीरिति तत्र किञ्चिदन्यदेव कल्पनीयं स्यात्, तथा च लोकशास्त्रविरोध इति सुष्ठूक्तं हरिभद्राचार्यैः –

"अग्निजलभूमयो यत्परितापकरा भयेऽनुपमसिद्धाः ।
रागादयस्य रौद्रा असत्प्रवृत्त्यास्पदं लोके ॥
परिकल्पिता यदि ततो न सन्ति तत्त्वेन कथममी स्युरिति ।
परिकल्पिते च तत्त्वे भवभवविगमौ कथं युक्तौ ॥"

[षोडशक १६ ८–९]

इत्यादि । तस्मात् दृष्टेर्व्यावहारिकत्वकथयापि न निस्तारः । प्रपञ्चे परमार्थसत्त्वेनैव व्यवहारस्यापि सत्त्वान्तरानवगाहनादिति सर्वं रम्यम् ।

ब्रह्मज्ञानं पुनर्निरस्य सिद्धसेनोक्तस्योपसंहारः–

§७९ किञ्च सप्रकारं निष्प्रकारं वा ब्रह्मज्ञानं अज्ञाननिवर्तकमिति वक्तव्यम्, आद्ये निष्प्रकारे ब्रह्मणि सप्रकारकज्ञानस्य अयथार्थत्वात् न अज्ञाननिवर्तकत्वम्, तस्य यथार्थत्वे वा नाद्वैतसिद्धिः, द्वितीयपक्षस्तु निष्प्रकारकज्ञानस्य क्वापि अज्ञाननिवर्तकत्वादर्शनाद् नानुभावनार्हः । किञ्च निष्प्रकारकज्ञानस्य क्वापि अज्ञाननिवर्तकत्वं न दृष्टमिति शुद्धब्रह्मज्ञानमात्रात् कथमज्ञाननिवृत्तिः ? ।

§८० न च 'सामान्यधर्ममात्रप्रकारकप्रमाविषयप्रमात्वं अज्ञाननिवृत्तौ प्रयोजकम्, अत्र प्रमेयमितिज्ञाने अतिव्याप्तिवारणाय सामान्येति, प्रमेयो घट इत्यादावतिव्याप्ति(अव्याप्ति)वारणाय मात्रेति, तेनेदं विशेषप्रकारे निष्प्रकारे चानुगतमिति निष्प्रकारकब्रह्मज्ञानस्यापि ब्रह्माज्ञाननिवर्तकत्वं लक्षणान्वयात्, न च सामान्यधर्ममात्रप्रकारकज्ञानेऽव्याप्तिः, इदमनिदं वा, प्रमेयमप्रमेयं वा इत्यादिसंशयादर्शनात् सामान्यमात्रप्रकारकज्ञानानङ्गीकारेण तन्निवर्तकस्य तस्यासम्भवात्' इति वाच्यम्, निष्प्रकारकसंशयाभावेन निष्प्रकारकज्ञानासिद्ध्या निष्प्रकारकब्रह्मज्ञानस्यापि तन्निवर्तकत्वायोगात् । एकत्र धर्मिणि प्रकाराणामनन्तत्वे प्रकारनिष्ठया निरवच्छिन्नप्रकारतासम्बन्धेन अधिष्ठानप्रमात्वेन तथा तदज्ञाननिवर्तकत्वौचित्यात् । अधिष्ठानत्वं च भ्रमजनकाज्ञानविषयत्वं वा अज्ञानविषयत्वं वा स्वरूपोपाधिर्वा । न च 'विषयत्वेन तत्त्वं युक्तम्, प्रमेयत्वस्य च केवलान्वयिनोऽनङ्गीकारात् न प्रमेयमिति ज्ञानाद् घटाद्याकाराज्ञाननिवृत्तिप्रसङ्गः' इति वाच्यम्, द्रव्यमिति ज्ञानात् तदापत्तेरवारणात् । न च 'तस्य द्रव्यत्वविशिष्टविषयत्वेऽपि घटत्वविशिष्टाविषयत्वात्' तद्वारणम्, द्रव्यत्वविशिष्टस्यैव घटावच्छेदेन घटत्वविशिष्टत्वात् सत्त्वविशिष्टब्रह्मवत्, विशिष्टविषयज्ञानेन विशिष्टविषयाज्ञाननिवृत्त्यभ्युपगमेऽपि च ब्रह्मणः सच्चिदानन्दत्वादिधर्मविशिष्टप्रमाः ।

१ च नरेचेत् त । २ तस्मात् तृ ... [illegible] । ३ "सर्वं ..." मु अ ब । ४ "...[illegible]" अ ब । ५ ... [illegible] त । ६ "...[illegible] ..." मु अ ब । ... मु त । ... [illegible] त ।

§८१ एतेन — अन्यत्र घटाज्ञानत्वघटत्वप्रकारकप्रमात्वादिना नाश्यनाशकभावेऽपि प्रकृते ब्रह्माज्ञाननिवृत्तित्वेन ब्रह्मप्रमात्वेनैव कार्यकारणभावः, न तु ब्रह्मत्वप्रकारकेति विशेषमनुपादेयम्, गौरवात्तदनुपयोगाद्विरोधाच्च — इत्यपि निरस्तम्, विशिष्टब्रह्मण एव संशयेन विशिष्टाज्ञाननिवृत्त्यर्थं विशेषोपरागेणैव ब्रह्मज्ञानस्य अन्वेषणीयत्वात्, शुक्तिरजतादिस्थलेऽपि विशिष्टाज्ञानविषयस्यैव अधिष्ठानत्वं क्लृप्तमिति अत्रापि अयं न्यायोऽनुसर्तव्यः।

§८२ किञ्च, ब्रह्मणो निर्धर्मकत्वे तत्र विषयताया अप्यनुपपन्नत्वात् तद्विषयज्ञानत्वमपि तत्र दुर्लभम्। विषयता हि कर्मतेति त्वदङ्गीकारे तस्य क्रियाफलशालित्वेन घटादिवज्जडत्वापत्तेः, तद्विषयज्ञानाजनकत्वे च तत्र वेदान्तानां प्रामाण्यानुपपत्तिः। न च तदज्ञाननिवर्तकतामात्रेण तद्विषयत्वोपचारः, अन्योन्याश्रयात्। न च कल्पिता विषयता कर्मत्वाप्रयोजिका, वास्तवविषयतायाः क्वापि अनङ्गीकारात्, व्यावहारिकत्वाच्च तुल्यत्वात्।

§८३ न च 'ब्रह्मणि ज्ञानविषयताऽसम्भवेऽपि ज्ञाने ब्रह्मविषयता तद्भिन्नग्राहकत्वरूपाऽन्या वा काचिदनिर्वचनीया सम्भवतीति नानुपपत्तिः, विषयतैवाकारः प्रतिविषयं विलक्षणः, अत एव ब्रह्माकारापरोक्षप्रमाया एव अज्ञाननिवर्तकत्वम्, अज्ञानविषयस्वरूपाकारापरोक्षप्रमात्वस्य सर्वत्रानुगतत्वात्, न च — इदमित्थाकारं घटाकारमिति — ग्रहीतुमपि शक्यम्, आकारभेदस्य स्फुटतरसाक्षिप्रत्यक्षसिद्धत्वात्' इति वाच्यम्, ज्ञाननिष्ठाया अपि ब्रह्मविषयताया ब्रह्मनिरूपितत्वसापेक्षत्वेन ब्रह्मणि तन्निरूपकत्वधर्मसत्त्वे निर्धर्मकत्वव्याघातात्, उभयनिरूप्यस्य विषयविषयिभावस्यैकधर्मत्वेन निर्वाहायोगात्। न च 'ब्रह्मण्यपि कल्पितविषयतोपगमे कर्मत्वेन न जडत्वापातः, स्वसमानसत्ताकविषयताया एव कर्मत्वापादकत्वात्, घटादौ हि विषयता स्वसमानसत्ताका द्वयोरपि व्यावहारिकत्वात्, ब्रह्मणि तु परमार्थसति व्यावहारिकी विषयता न तथेति स्फुटमेव वैषम्यात्' इति वाच्यम्, सत्ताया इव विषयताया अपि ब्रह्मणि पारमार्थिकत्वोक्तावपि बाधकाभावात्, परमार्थनिरूपितधर्मस्य व्यावहारिके व्यावहारिकत्ववद्व्यावहारिकनिरूपितस्य धर्मस्य पारमार्थिके पारमार्थिकताया अपि न्यायप्राप्तत्वात्। सत्तायामुपलक्षणभेदेऽपि उपलक्ष्यमेकमेवेति न दोष इति चेत्; विषयतायामपि एष एव न्यायः। एवञ्च अनन्तधर्मात्मकधर्म्यभेदेऽपि ब्रह्मणि कौटस्थ्यं द्रव्यापरिशेषात् अव्याहतमेव। तथा च अन्यूनानतिरिक्तधर्मात्मद्रव्यसमावलम्बलक्षणमोक्षगुणेन भगवन्तं तुष्टाव स्तुतिकारः—

"भवतीममनन्तसुखिनं विमलज्ञानमनन्तमर्थितम्।
न च हीनकलोऽसि माधिक समतां चाप्यतिवृत्य वर्तसे॥" [स्तु० ४ २९] इति।

ब्रह्माकाराया ब्रह्मविषयायाश्च वृत्तेर्निस्सारत्वोक्तिः—

§८४ एतेन 'चैतन्यविषयतैव जडत्वापादिका, न तु वृत्तिविषयतापि, "यतो वाचो निवर्तन्ते" [तैत्तिरी० २ ४ १], "न चक्षुषा गृह्यते नापि वाचा" [मुण्ड० ३ १ ८],

१ "तैक्ष्ण्यभिन्नेन निर्वा" त। २ "याधी भिन्न" अ व। ३ विषयताया ब्रह्म° त। ४ "भावन्, तन्निरूपितस्य तस्य धर्म° त। ५ "चेति वैषम्य विषय" त। ६ कौटस्थ्यमव्याहतमेव त।

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥" [भगवद्गीता ५.१६] इत्यादि ।

एवम्–"ब्रह्मविद् ब्रह्मैव भवति" [मुण्ड० ३ २ ९] "तरति शोकमात्मवित्" [छान्दो० ७ १ ३]

"तत्त्वविद्यां विरक्ता हृदि यतिभिरवेक्षिते ।
योगी मायाममेयाय तस्मै ज्ञानात्मने नमः" ॥ इति ।
"अविद्यायाः परं पारं तारयसि" [प्रश्नो० ६ ८] इत्यादिः ।

श्रुतार्थापत्तिश्च–ब्रह्मज्ञानाद् ब्रह्मभावः श्रूयमाणस्तत्प्रतिबन्धकाज्ञाननिवृत्तिमन्तरेण नोपपद्यत इति ज्ञानस्याज्ञाननिवृत्तिं गमयति ।

"अनृतेन हि प्रत्यूढाः" [छान्दो० ८ ३ २] "नीहारेण प्रावृताः" [ऋग्वेद० १० ८२ ७]
"अन्तःपुष्पाकमन्तरम्"[1]
"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" [भगवद्गीता० ५.१५]

इत्यादि श्रुतिस्मृतिभ्योऽज्ञानमेव[2] च मोक्षव्यवधायकत्वेनावगतम्, एकस्यैव तत्त्वज्ञानेनाज्ञाननिवृत्त्यभ्युपगमाच्च 'नान्यत्र व्यभिचारदर्शनेन ज्ञानसामान्यनिवर्तकत्व[3]बाधोऽपीति चेत्; न, एतस्यैकजीववादस्य भ्रममात्रकल्पितत्वात्, अन्यथा जीवान्तरप्रतिभासस्य स्वाप्निकजीवान्तरप्रतिभासवत् विभ्रमत्वे जीवप्रतिभासमात्रस्यैव[4] तथात्वं स्यादिति चार्वाकमतसाम्राज्यमेव वेदान्तिना प्राप्तं स्यात् ।

§८९ उक्तश्रुतयस्तु कर्मण एव व्यवधायकत्वम्, क्षीणकर्मात्मन एव च ब्रह्मरूपं प्रतिपादयितुमुत्सहन्त इति किं पक्षमत्सरोद्धराज्ञानादिकल्पनया स्वाभिप्रायविडम्बनेव ?।

निर्विकल्पबोधे शुद्धद्रव्यनयावेशस्योक्तिः–

§९० निर्विकल्पकब्रह्मबोधोऽपि शुद्धद्रव्यनयादेशमात्रमेवावलम्ब्य, सर्वपर्यायनयविषयव्युत्क्रम एव तत्प्रवृत्तेः, न तु सर्वथा जगदभावपक्षपातित्वमिति सम्यग्दर्शी वचनोद्गारः । शाब्द एव स इत्यत्र तु नाग्रहः, यावत्पर्यायोपरागासम्भवविशेषणसहकृतेन मनसैव तद्ग्रहसम्भवात्[5] । न केवलमात्मनि, किन्तु सर्वत्रैव द्रव्ये पर्यायोपरागानुपपत्तिप्रवृत्तविचारे[6] मनसा निर्विकल्पक एव प्रत्ययोऽनुभूयते । उक्तं च सम्मतौ–

"पज्जवणयवुक्कंतं वत्थुं दव्वट्ठियस्स वयणिज्जं ।
जाव दविओवओगो अपच्छिमवियप्पणिव्वयणो ॥" [सम्मति० १।८] इति ।

§९१ पर्यायनयेन व्युत्क्रान्तं गृहीत्वा विचारेण शुद्धं वस्तु द्रव्यार्थिकस्य वक्तव्यम् । यथा 'घटो द्रव्यम्' इत्यत्र घटत्वविशिष्टस्य परिच्छिन्नस्य द्रव्यत्वविशिष्टेनापरिच्छिन्नेन सहाभेदान्वयासम्भव इति शुद्धैव द्रव्यमिति द्रव्यार्थिकप्रवृत्तिस्तत्रापि तदन्वेषिणयामपरापरद्रव्यार्थिकप्रवृत्तिः यावद्द्रव्योपयोगः । न विशेषे पश्चिमे उत्तरे विकल्पनिर्वचने सवि-

---

१ अन्तःपुष्प° अ ब त । २ °मेव मोक्ष° मु अ ब । ३ °त्तृत्व अ ब । ४ °य मात्र° अ ब ।
५ °पारम्भ° त । ६ °चारे हि म° त । ७ °मात्र एव त ।

कल्पकर्मीभ्यवहारो यत्र स तथा शुद्धसङ्ग्रहावसान इति यावत्। ततः परं विकल्पवचनाप्रवृत्तेः इत्येतस्या अर्थः।

सविकल्पाविकल्पयोरनेकान्तस्य समर्थनम्–

§९२ "तत्त्वमसि" [छान्दो० ६ ८ ७] इत्यादावपि आत्मनस्तत्तदन्यद्रव्यपर्यायोपरागासम्भवविचारसहकृतमनस्त्वेन शुद्धद्रव्यविषयं निर्विकल्पकमिति शुद्धदृष्टौ यज्ज्ञानात् ब्रह्मज्ञानस्य को भेदः। एकत्र सद्द्वैतमपरत्र च ज्ञानाद्वैतं विषय इत्येतावति भेदे स्त्वौपचारिकं सविकल्पकमेव स्यादिति सविकल्पकाविकल्पकत्वयोरप्यनेकान्त एव श्रेयान्। तदुक्तम्–

"सविअप्पणिव्विअप्पं इय पुरिसं जो भणेज्ज अविअप्पं।
सविअप्पमेव वा णिच्छएण ण स णिच्छिओ समए॥" [सन्मति० १।३५] इति।

§९३ न च निर्विकल्पको द्रव्योपयोगोऽवग्रह एवेति तत्र विचारसहकृतमनोजन्यत्वानुपपत्तिः, विचारस्य ईहात्मकत्वेन ईहाजन्यस्य व्युपरतावग्रहस्य तस्य नैश्चयिकापायरूपस्यैव अभ्युपगमात्, अपाये नामजात्यादियोजनानियमस्तु शुद्धद्रव्यादेशरूपश्रुतनिमित्तातिरिक्त एवेति विभावनीयं स्वसमयनिष्णातैः।

श्रुत्यैव ब्रह्मबोधस्य शाब्दत्वमन्मानसत्वोक्तिः–

§९४ ब्रह्माकारबोधस्य मानसत्वे "मनसैवविन्मनुते च शृण्वन्ति वेदेनैव वेदितव्यं" "तं त्वौपनिषदं पुरुषं पृच्छामि" [बृहदा० ३ ९ २६] इत्यादिश्रुतिविरोध इति चेत्; शाब्दत्वेऽपि "यद्वाचानभ्युदितं", [केनो० १ ४] "न चक्षुषा गृह्यते, नापि वाचा," [मुण्ड० ३ १ ८] "यतो वाचो निवर्तन्ते" [तैत्तिरी० २ ४ १] इत्यादिश्रुतिविरोधस्तुल्य एव।

§९५ अथ वागगम्यत्वनिषेधकश्रुतीनां मुख्यामुख्यविषयत्वावगाहित्वेनोपपत्तिः अखण्ड ब्रह्मस्वरूपस्यैव ब्रह्मणि महावाक्यगम्यत्वप्रतिपादनात्। मनसि तु मुख्यामुख्यभेदाभावात् "यन्मनसा न मनुते" [केनो० १ ५] इत्यादिविरोध एव, "सर्वे वेदा यत्रैकं भवन्ति स मानसीन आत्मा मनसैवानुद्रष्टव्यः" इत्यादिश्रुतौ मानसीनत्वं तु मनस्युपायादुपलभ्यमानत्वम्, न तु मनोजन्यसाक्षात्कारत्वम्। मनसैवेति तु कर्तरि तृतीया आत्मनोऽकर्तृत्वप्रतिपादनार्था मनसो दर्शनकर्तृतामाह, न करणताम्, औपनिषदसमाख्याविरोधात्। "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" [बृहदा० १ ५.३] इति श्रुतौ मृद्घट इतिवदुपादानकारणत्वेन मनःसामानाधिकरण्यप्रतिपादनात्, तस्य निमित्तकारणत्वविरोधापत्ति चेत्; न, कामादीनां मनोधर्मत्वप्रतिपादिकायाः श्रुतेः मनःपरिणामलक्षणभावमनोविषयतया एव न्याय्यत्वात्। "मनसा ह्येव पश्यति मनसा शृणोति" [बृहदा० १ ५.३] इत्यादौ मनःकरणत्वस्यापि श्रुतेर्दीर्घकालिकसंज्ञानरूपदर्शनपरत्वेन चक्षुरादिकरणसत्त्वेऽपि तत्तदाकारार्थान्वयोपपत्तेः, त्वन्मतेऽपि ब्रह्मणि मानसत्वविधि

१ °त्तद्विरोध° त। २ °रेणु° त। ३ श्रुतिभिर्वि(भि)त्या° मु। ४ °र्थं तस्मै° त म व। ५ °भेदेषु° म प। ६ तत्रैव त। ७ °करणत्वस्यापि मु।

निषेधयोः कृतिविषयत्वतदुपरक्तचैतन्यविषयत्वाभ्यामुपपत्तेश्च । शब्दस्य स्वपरोक्षज्ञानजनकत्वे समासभङ्गप्रसङ्ग एव स्पष्टं दूषणम् ।

§ ९६ न च 'प्रथमं परोक्षज्ञानं जनयतोऽपि शब्दस्य विचारसहकारेण पश्चादपरोक्षज्ञानजनकत्वमिति न दोषः' इति वाच्यम्, अर्धजरतीयन्यायापातात् । न खलु शब्दस्य परोक्षज्ञानजननस्वाभाव्यं सहकारिसहस्रेणापि अन्यथाकर्तुं शक्यम्, आगन्तुकस्य स्वभावत्वानुपपत्तेः । न च संस्कारसहकारेण चक्षुषा प्रत्यभिज्ञानात्मकप्रत्यक्षजननवदुपपत्तिः, यदंशे संस्कारसापेक्षत्वं तदंशे स्मृतित्वापातो यदंशे च चक्षुःसापेक्षत्वं तदंशे प्रत्यक्षत्वापात इति भिन्नैव प्रत्यभिज्ञानस्य प्रमाणान्तरत्वमिति जैनैः स्वीकारात् । स्वे स्वे विषये युगपज्ज्ञानं जनयतोश्चक्षुःसंस्कारयोरर्थसमाजेनैकज्ञानजनकत्वमेव पर्यवस्यति, अन्यथा रजतसंस्कारसहकारेण शुक्तिकेन्द्रियेऽपि रजते चाक्षुषज्ञानापत्तेरन्यथाख्यात्यस्वीकारभङ्गप्रसङ्ग इति सर्वसाक्षी तूभयात्मकैकज्ञानानभ्युपगमादेव निराकर्तव्यः, अन्यथा रजतभ्रमेऽपि उभयात्मकत्वापत्तेः, पर्वतो वह्निमान् इत्यनुमितावपि उभयसमाजांशे प्रत्यक्षानुमितित्वासङ्करापत्तेश्च ।

§ ९७ अथ 'मनस इव शब्दस्य परोक्षापरोक्षज्ञानजननस्वभावाङ्गीकारान्न दोषः । मनस्त्वेन परोक्षज्ञानजनकता, इन्द्रियत्वेन चापरोक्षज्ञानजनकता इत्यस्ति मनसोऽवच्छेदकभेद इति चेत्; शब्दस्यापि विषयावच्छिन्नज्ञानजनकत्वेन वा ज्ञानजनकत्वेन वा परोक्षज्ञानजनकस्य योग्यपदार्थनिरूपितसंसर्गार्थमेयपरशब्दत्वेन चापरोक्षज्ञानजनकत्वेति कथं नावच्छेदकभेदः ?, 'धार्मिकस्त्वमसि' इत्यादौ व्यभिचारवारणाय निरूपितान्तं विशेषणम्, इतरव्यावर्त्यं तु स्पष्टमेव । एतच्च 'दशमस्त्वमसि' 'राजा त्वमसि' इत्यादिवाक्यात् 'दशमोऽहमस्मि' 'राजाहमस्मि' इत्यादिसाक्षात्कारदर्शनात्कल्प्यते, 'नाहं दशमः' इत्यादिभ्रमनिवृत्तेः, अत इत्थमेव सम्भवात् । साक्षात्कारिभ्रमे साक्षात्कारिविरोधिज्ञानत्वेनैव विरोधित्वकल्पनात् । न च 'तत्र वाक्यात्संसर्गमात्रोपस्थितौ मानसः संसर्गबोधः' इति वाच्यम्, सर्वत्र वाक्ये तथा वक्तुं शक्यत्वेन शब्दप्रमाणमात्रोच्छेदप्रसङ्गात्' इति चेत्; मैवम्, 'दशमस्त्वमसि' इत्यादौ वाक्यात्परोक्षज्ञानानन्तरं मानसज्ञानान्तरस्यैव भ्रमनिवर्तकत्वकल्पनात्, 'धार्मिकस्त्वमसि' इत्यादौ विशेष्यांशस्य योग्यत्वादेव योग्यपदार्थनिरूपितसंसर्ग योग्यपदार्थगतावच्छेदकविशिष्टत्वस्यावश्यवाच्यत्वेन महावाक्यादपि तत्पदार्थगतावच्छेदकस्य अयोग्यत्वेन अपरोक्षज्ञानासम्भवात्, अयोग्यांशसंयोगेन योग्यांशापरोक्षज्ञानाभ्युपगमे च व्यापकत्वमेव योग्यपदार्थत्वमित्युक्तौ च 'धार्मिकस्त्वमसि' इत्यादावपि शुद्धापरोक्षविषयत्वे तदवान्तरविशेषवदनानुपपत्तिः । तथा च योग्यशब्दपरत्वमपि उदाहरणस्थानदौर्लभ्यम् । अयं च विरोधोऽस्माकं पर्यायविनिर्मोकेण शुद्धब्रह्मविषयतापर्यवसायकस्य शब्दनयस्य इत्यलं मतवादेन ।

§ ९८ किञ्च, संसर्गपदार्थमेयपरशब्दत्वेन अपरोक्षज्ञानजनकत्वोक्तौ 'यूयं राजानः' इत्यत्रोऽसिद्धिर्संयोग्यविशेष्यकारस्य प्रकारकापरोक्षाप्रत्ययापत्तिः, तत्र तादृशमानसाभ्युपगमे चान्यत्र कोऽपराधः ? । एतेन एकवचनान्तसंसर्गपदार्थग्रहणेऽपि न निस्तार इत्युक्तेन

१ नवीने पक्षः म च । २ °त्वात्पचोर्या° मु म च । ३ °महोदा° त । ४ °पक्ष न दृश्य° त ।
५ °विशेषणे° त । ६ नाले नास्ति त ।

युगमिति प्रयोगेऽप्यस्तेव एकाभिप्रायकत्वेऽपत्प्रत्यये च तत्तदभिप्रायकशब्दत्वेन तत्तच्छाब्द बोधहेतुत्वमेव युक्तम् । अत एव वाक्यादपि प्रत्यावधिप्रादखण्डः, पदादपि च पर्याया पदित्वात् सखण्ड' शाब्दबोध इति जैनी प्रक्रियाव्यवस्था । तस्मान्न शब्दस्य अपरोक्षज्ञान जनकत्वम् ।

§९९ एतेन–अपरोक्षपदार्थाभेदपरशब्दत्वेन अपरोक्षज्ञानजनकत्वम्, अत एव 'शुक्ति रियम्' इति वाक्याच्छाब्दस्य रजतभ्रमनिवृत्तिः, एवं च चैतन्यस्य वास्तवापरोक्षत्वात् अपरोक्ष ज्ञानजनकत्वं महावाक्यस्य–इत्यपि निरस्तम्, वास्तवापरोक्षस्वरूपविषयत्वस्य स्वभीत्या 'तत्त्वमसी'तिवाक्ये सम्भवेऽपि 'दशमस्त्वमसी'त्यादावसम्भवात्, निरूपाधिज्ञानविषयत्वस्य च शाब्दबोधात्पूर्वमभावात्, यदा कदाचिन्निरूपाधिज्ञानत्वप्रत्यये 'पर्वतो वह्निमान्' इत्यादि वाक्यानामपि अपरोक्षस्वरूपविषयतया अपरोक्षज्ञानजनकत्वप्रसङ्गात्, "यतो वा इमानि भूतानि जायन्ते" [ तैत्तिरी० ३ १ १ ] "सत्यं ज्ञानमनन्तम्" [ तैत्तिरी० २ १ १ ] इत्यादि वाक्यानामपरोक्षस्वरूपविषयतया अपरोक्षज्ञानजनकत्वे महावाक्यवैयर्थ्यापाताच्च ।

§१०० किञ्च, एवं घटोऽस्तीति शाब्दे चाक्षुषत्वमप्यापद्येत, अपरोक्षपदार्थाभेदपर शब्दादिव अपरोक्षपक्षसाध्यकानुमितिसामग्रीतोऽपरोक्षानुमितिरपि च प्रसज्येत । एवं च भिन्नविषयत्वाप्रवेशेनैव अनुमितिसामग्र्या लाघवात् बलवत्त्वमिति विशेषदर्शनकालीन-भ्रमसंशयोत्तरप्रत्यक्षमात्रोच्छेद इति बहुतरं दुर्घटम् ।

§१०१ एतेन–प्रमाणाभेदविषयत्वेन अपरोक्षज्ञानजनकत्वम्–इत्यपि निरस्तम्, 'सर्वज्ञत्वादिविशिष्टोऽसि' इत्यादिवाक्यादपि तथाप्रसङ्गात्, ईश्वरो मदभिन्नचेतनत्वात् मद्वदिति अनुमानादपि तथाप्रसङ्गाच्चेति । महावाक्यजन्यमपरोक्षं शुद्धात्मविषयमेव केवलज्ञानमिति वेदान्तिनां महानेव मिथ्यात्वाभिनिवेश इति विभावनीयं सूरिभिः ।

## [ ७ केवलज्ञानदर्शनयोर्भेदाभेदचर्चा । ]

§१०२ इदमिदानीं निरूप्यते–केवलज्ञानं स्वसमानाधिकरणकेवलदर्शनसमानकालीनं न वा, केवलज्ञानक्षणत्वं स्वसमानाधिकरणदर्शनक्षणाव्यवहितोत्तरत्वव्याप्यं न वा ? एव माद्याः क्रमोपयोगवादिनां जिनभद्रगणिक्षमाश्रमणपूज्यपादानाम्, युगपदुपयोगवादिनां च मल्लवादिप्रभृतीनाम्, यदेव केवलज्ञानं तदेव केवलदर्शनमिति वादिनां च महावादि श्रीसिद्धसेनदिवाकराणाम्, साधारण्यो विप्रतिपत्तयः । यत्तु युगपदुपयोगवादित्वं सिद्धसे-नाचार्याणां नन्दिवृत्त्यादावुक्तं तदभ्युपगमवादाभिप्रायेण, न तु स्वतन्त्रसिद्धान्ताभिप्रायेण, क्रमाक्रमोपयोगद्वयपर्यनुयोगानन्तरमेव स्वपक्षस्य सम्मतौ उद्भावितत्वादिति द्रष्टव्यम् ।

छाद्मस्थिकज्ञानदर्शनयोरेव क्रमवर्तित्वम्–

§१०३ एतच्च तत्त्वं सयुक्तिकं सम्मतिगाथाभिरेव प्रदर्शयामः ।

"मणपज्जवणाणंतो णाणस्स य दरिसणस्स य विसेसो ।
केवलणाणं पुण दंसणं ति णाणं ति य समाणं ॥" [ सन्मति० २।३ ]

---

१ केवल पद° त । २ °वाक्य° अ ब । ३ न केवलदर्श° त ।

ज्ञा० ९

§१०४ युगपदुपयोगद्वयाभ्युपगमवादोऽयम्—मनःपर्यायज्ञानमन्तः पर्यवसानं यस्य स यथा, ज्ञानस्य दर्शनस्य च विशेषः पृथग्भाव इति साध्यम् । अत्र च छद्मस्थोपयोगत्वं हेतुरूह्यम्। तथा च प्रयोगः—चक्षुरचक्षुरवधिज्ञानानि चक्षुरचक्षुरवधिदर्शनेभ्यः पृथक्कालानि, छाद्मस्थोपयोगात्मकज्ञानत्वात्, श्रुतमनःपर्यायज्ञानवत् । वाक्यार्थविषये श्रुतज्ञाने, मनोद्रव्यविशेषालम्बने मनःपर्यायज्ञाने चादर्शनस्वभावे सत्यवधिज्ञानदर्शनोपयोगाक्रिभक्तत्वं प्रसिद्धमेवेति टीकाकृतः ।

§१०५ दर्शनत्रयपृथक्कालत्वस्य क्वापि एकस्मिन्नसिसाधयिषितत्वात्, सदर्शनपृथक्कालत्वस्य च सिसाधयिषितस्य उभयदृष्टान्तयोरभावात्—असाधारणत्वं हेतु', व्यतिरेकी च प्रयोगः, यदनन्यत्वं वा हेतु' यद्यदनन्यं तत्तत् पृथक्कालमिति सामान्यव्याप्तौ यथा दण्डात् घट इति च दृष्टान्त इति तु युक्तम् ।

§१०६ केवलज्ञानं पुनर्दर्शनं दर्शनोपयोग इति वा ज्ञानं ज्ञानोपयोग इति वा समानं तुल्यकालं तुल्यकालीनोपयोगद्वयात्मकमित्यर्थः । प्रयोगश्च—केवलिनो ज्ञानदर्शनोपयोगावेककालीनौ, युगपदाविर्भूतस्वभावत्वात्, यावेवं तावेवम्, यथा रवेः प्रकाशतापौ ।

केवलज्ञानदर्शनयोः क्रमवादस्य खण्डनम्—

§१०७ अयमभिप्राय आगमविरोधीति केचाभिन्नवस्, तन्निक्षिपन्नाह—

"केई भणंति जइया जाणइ तइया न पासइ जिणो त्ति ।
सुत्तमवलम्बमाणा तित्थयरासायणा भीरू ॥" [ सन्मति० २।४ ]

§१०८ केचिज्जिनभद्रानुयायिनो भणन्ति—'यदा जानाति तदा न पश्यति जिनः' इति । सूत्रम्— "केवली णं भंते इमं रयणप्पभं पुढविं आगारेहिं पमाणेहिं हेऊहिं संठाणेहिं परिवारेहिं जं समयं जाणइ नो तं समयं पासइ ? । हंता गोयमा ! केवली" [ प्रज्ञापना पद ३० सू० ३१४ ] इत्यादिकमवलम्बमानाः ।

§१०९ तस्य च सूत्रस्य क्रियाममर्यक्षेपामभिमतः—केवली सम्पूर्णबोधः । णमिति वाक्यालङ्कारे । भंते इति भगवन् । इमां रत्नप्रभामन्वर्थाभिधानां पृथ्वीमाकारैः समनिम्नोन्नतादिभिः, प्रमाणैर्दैर्घ्यादिभिः, हेतुभिः अनन्तानन्तप्रदेशिकैः स्कन्धैः, संस्थानैः परिमण्डलादिभिः, परिवारैर्घनोदधिवलयादिभिः । 'जं समयं णो तं समयमिति' च "कालाध्वनोरत्यन्तसंयोगे' [पा० २.३.५] इति द्वितीया सप्तम्यर्थाभिधा, तेन यदा जानाति न तदा पश्यति इति भावः । विशेषोपयोगः सामान्योपयोगान्तरितः, सामान्योपयोगश्च विशेषोपयोगान्तरितः, तत्स्वाभाव्यादिति प्रश्नार्थः । उत्तरं पुनः—हंता, गोयमेत्यादिकं प्रश्नानुमोदकं गौतमेति गोत्रेणामन्त्रणं प्रश्नानुमोदनार्थम् । पुनस्तदेव सूत्रमुच्चारणीयम् । हेतुप्रश्नस्य चात्र सूत्रे उत्तरम्—"सागारे से नाणे हवइ अणागारे से दंसणे" [ प्रज्ञापना पद ३० सू० ३१४ ] इति । साकारं विशेषावलम्बि यस्य केवलिनो ज्ञानं भवति,

१ "यसे च दर्श" त । २ "अभिधानत्वं" अ ब । ३ "यदं इत्येतदभिप्रायकारेण केव" त । ४ "ष्वकी मनाद त ।

अनाक्षरमतिक्रान्तविशेषं सामान्यालम्बिदर्शनम् । न चानेकप्रत्ययोत्पत्तिरेकदा निरावरणस्यापि, तस्वाभाव्यात् । नहि च चक्षुर्ज्ञानकाले श्रोत्रज्ञानोत्पत्तिरुपलभ्यते । न च आशुत्वात्तदा तदनुत्पत्तिः, सर्वसमयेऽपि अनुत्पत्तिप्रसङ्गात् । न च अणुना मनसा यदा यदिन्द्रियसंयोगस्तदा तज्ज्ञानमिति क्रमः परवाद्यभिमतोऽपि युक्तिमान्, सर्वाङ्गीणसुखोपलम्भाद्युपपत्तये मनोवर्गणापुद्गलानां शरीरव्यापकत्वकल्पनात्, सुषुप्तौ ज्ञानानुत्पत्तये । त्वङ्मनोयोगस्य ज्ञानसामान्ये हेतुत्वेन रासनकाले त्वाचरासनोभयोत्पत्तिवारणस्य इत्यप्यसम्भवात् । ततो युगपदनेकप्रत्ययानुत्पत्तौ स्वभाव एव कारणं नान्यत् । तथि रितेऽपि च व्यात्मके विषये सर्वविशेषानेव कवलयन्नं गृह्णाति, सर्वसामान्यानि च केवलदर्शनमिति स्वभाव एवानयोरिति ।

§११० एते च व्याख्यातारलीकदराशातनाया अभीरवः, तीर्थंकरमाशातयन्तो न बिभ्यतीति यावत् । एवं हि निःसामान्यस्य निर्विशेषस्य वा वस्तुनोऽभावेन न किञ्चिज्जानाति केवली न किञ्चित्पश्यति इत्यपसिद्धान्तस्यैव पर्यवसानात् । न च अन्यतरमुख्योपसर्जन विषयतामपेक्ष्योभयग्राहित्वेऽपि उपयोगक्रमाविरोधः, मुख्योपसर्जनभावेन उभयग्रहणस्य क्षयोपशमविशेषप्रयोज्यत्वात्, केवलज्ञाने छद्मस्थज्ञानीययावद्विषयतोपगमे अवग्रहादिसङ्कीर्णरूपप्रसङ्गात् । उक्तसूत्रस्य तु न यथाश्रुत एवार्थः किन्तु अयं – केवलीमां रत्नप्रभां पृथिवीं यैराकारादिभिः समकं तुल्यं जानाति, न तैराकारादिभिस्तुल्यं पश्यतीति किमेवं प्राश्नम् ? । एवमित्यनुमोदना । ततो हन्त पृष्टे सति तत्प्रतिवचनं भिन्नालम्बनप्रदर्शकं तज्ज्ञानं साकारं भवति यतो दर्शनं पुनरनाकारमित्यतो भिन्नालम्बनावेतौ प्रत्ययाविति प्रत्यपादीति टीकाकृत् । अत्र यद्यपि 'जं समयं' इत्यत्र 'जं' इति अम्भावः प्राकृतलक्षणात्, यत्कृतमित्यत्र 'जं कयं' इति प्रयोगस्य लोकेऽपि दर्शनादिति वक्तुं शक्यते, तथापि तृतीयान्तपदवाच्यैराकारादिभिः तृतीयान्तसमासस्यपदार्थस्य समकपदार्थस्य च अन्यूनानतिरिक्तधर्मविशिष्टस्य रत्नप्रभायां भिन्नलिङ्गत्वादनन्वय इति 'यत् समकम्' इत्यादि क्रियाविशेषणत्वेन व्याख्येयम् । रत्नप्रभाकर्मकाकारादिनिरूपितयावदन्यूनानतिरिक्तविषयताकज्ञानवान् न तादृशयावदन्यूनानतिरिक्तविषयताकदर्शनवान् केवलीति फलितोऽर्थः । यदि च तादृशस्य विशिष्टदर्शनस्य निषेध्यस्याप्रसिद्धेर्न तन्निषेधः, 'असतो णत्थि णिसेहो' [ विशेषा० गा० १५७४ ] इत्यादिवचनादिति सूक्ष्ममीक्ष्यते, तदा क्रियाप्रधानमाख्यातमिति वैयाकरणनयाश्रयणेन रत्नप्रभाकर्मकाकारादिनिरूपितयावदन्यूनानतिरिक्तविषयताकं ज्ञानं न तादृशं कवलिकर्तृकं दर्शनमित्येव बोधः, सर्वनयात्मके भगवत्प्रवचने यथोपपन्नान्यतरनयग्रहणे दोषाभावादिति तु वयमालोचयामः ।

केवलज्ञानदर्शनयोर्यौगपद्येऽनुमानम् –

§१११ हेतुयौगपद्यादपि बलेन उपयोगयौगपद्यमापतति इत्याह –

"केवलणाणावरणक्खयजायं केवलं जहा णाणं ।
तह दंसणं पि जुज्जइ णियआवरणक्खयस्संते ॥" [ सन्मति० २।५]

---

१ °कलैव क° त। २ °कादिनि कवि° त। ३ °नकमिति° त।

§११२ स्पष्टा, नवरं निद्रावरणक्षयस्यान्त इति दर्शनावरणक्षयस्यानन्तरक्षण इत्यर्थः। न च एकदोभयावरणक्षयेऽपि स्वभावहेतुक एव उपयोगक्रम इत्युक्तमपि साम्प्रतम्। एवं सति स्वभावेनैव सर्वत्र निर्वाहे कारणान्तरोच्छेदप्रसङ्गात्, कार्योत्पत्तिस्वभावस्य कारणेनेव तत्क्रमस्वभावस्य तत्क्रमेणैव निर्वाह्यत्वात्।

§११३ एतेन—सर्वव्यक्तिविषयकत्वसर्वजातिविषयकत्वयोः[1] पृथगेवावरणक्षयकार्यतावच्छेदकत्वात् तदवच्छिन्नोपयोगद्वयसिद्धिः—इत्यपि अपास्तम्। तत्सिद्धावपि तत्क्रमासिद्धेरावरणद्वयक्षयकार्ययोः समप्राधान्येन अर्पणगतेरप्रसराच्च। न च 'मतिश्रुतज्ञानावरणयोः एकदा क्षयोपशमेऽपि यथा तदुपयोगक्रमस्तथा ज्ञानदर्शनावरणयोर्युगपत्क्षयेऽपि केवलिन्युपयोगक्रमः स्यात्' इति शङ्कनीयम्। तत्र श्रुतोपयोगे मतिज्ञानस्य हेतुत्वेन, शाब्दादौ प्रत्यक्षादिसामग्र्याः[2] प्रतिबन्धकत्वेन च तत्सम्भवात्। अत्र तु क्षीणावरणत्वेन परस्परकार्यकारणभावप्रतिबध्यप्रतिबन्धकभावाभावेन विशेषात्।

सर्वज्ञे ज्ञानदर्शनयोर्भिन्नकालत्वस्य निरासः—

§११४ एतदेवाह—

'भण्णइ खीणावरणे जह मइनाणं जिणे ण संभवइ।
तह खीणावरणिज्जे विसेसओ दंसणं नत्थि ॥'[3] [सन्मति० २।६]

§११५. भण्यते निश्चित्योच्यते क्षीणावरणे जिने यथा मतिज्ञानं मत्यादिज्ञानं अवग्रहादिचतुष्टयरूपं वा ज्ञानं न सम्भवति, तथा क्षीणावरणीये विशेषतो ज्ञानोपयोगक्षणान्यकाले दर्शनं नास्ति, क्रमोपयोगत्वस्य मत्याद्यात्मकत्वव्याप्यत्वात् सामान्यविशेषोभयात्मकक्रमोपयोगत्वस्य च अवग्रहाद्यात्मकत्वव्याप्यत्वात्, केवलयोः क्रमोपयोगत्वे तदापत्तिरित्यापादनपरोऽयं ग्रन्थः। प्रमाणं तु—केवलदर्शनं केवलज्ञानतुल्यकालोत्पत्तिकम्, तदेककालीनसामग्रीकत्वात्, तादृशकार्यान्तरवत्, इत्युक्ततर्कानुगृहीतमनुमानमेवेति द्रष्टव्यम्।

केवलज्ञानदर्शनयोः क्रमवादे आगमविरोधः—

§११६ न केवलं क्रमवादिनोऽनुमानविरोधः, अपि त्वागमविरोधोऽपीत्याह—

'सुत्तम्मि चेव साई-अपज्जवसियं ति केवलं वुत्तं ।
सुत्तासायणभीरूहि तं च दट्ठव्वयं होइ ॥' [सन्मति० २।७]

§११७ साद्यपर्यवसिते केवलज्ञानदर्शने सूत्रे प्रोक्ते, क्रमोपयोगे तु द्वितीयसमये तयोः पर्यवसानमिति कुतोऽपर्यवसितता ?। तेन सूत्राशातनाभीरुभिः क्रमोपयोगवादिभिः तदपि द्रष्टव्यम्। चोऽप्यर्थः। न केवलं 'केवली णं भंते इमं रयणप्पभं पुढविं' इत्यादिसूत्रयथाश्रुतार्थानुपपत्तिमात्रमिति भावः। न च द्रव्यापेक्षयाऽपर्यवसितत्वम्, द्रव्यविषयप्रमोपचाराश्रुतेः। न च—"अर्पितानर्पितसिद्धेः" [तत्त्वार्थ० ५ ३१] इति तत्त्वार्थसूत्रानुरोधेन द्रव्यार्पणयाऽश्रुतयोरपि तयोः कल्पनं युक्तम्, अन्यथा पर्यायार्पणयोत्पादविगमात्मकत्वात्

१ °यकत्वयोर्° त। २ °तीपि व° त। ३ °णं उवओगे इ° त।

भवतोऽपि कथं तयोरपर्यवसानता ? –इति पर्यनुयोज्यम्, यद्धर्मावच्छिन्ने क्रमिकत्वप्रसिद्धि, तद्धर्मावच्छिन्ने अपर्यवसितत्वान्वयस्य निराकाङ्क्षत्वात्, अन्यथा 'ऋजुत्ववक्रत्वे अपर्यवसिते' इति प्रयोगस्यापि प्रसङ्गात् । मम तु रूपरसात्मकैकद्रव्यवत्क्रमभाविभिन्नोपाधिक्षेत्पादविगमात्मकत्वेऽपि केवलिद्रव्याद्व्यतिरेकतः तयोरपर्यवसितत्वं नानुपपन्नम् । अथ पर्यायत्वावच्छेदकधर्मविनिर्मोकेण शुद्धद्रव्यार्थादेशप्रवृत्तेः क्रमैकान्तेऽपि केवलयोरपर्यवसितत्वमुपपत्स्यते, अत एव पर्यायद्रव्ययोरादिष्टद्रव्यपर्यायत्वं सिद्धान्ते गीयते, तदवच्छेदकविनिर्मोकस्य विवक्षाधीनत्वादिति चेत्; किमयमुक्तधर्मविनिर्मोकस्तत्तत्पदार्थतावच्छेदकविशिष्टयोः अभेदान्वयानुपपत्त्या शुद्धद्रव्यलक्षणया, उत उक्तधर्मस्य विशेष्यत्वपरित्यागेन उपलक्षणत्वमात्रविवक्षया ? । आद्ये आद्यपद एव लक्षणायां 'शुद्धद्रव्यं शुद्धात्मद्रव्यं वा अपर्यवसितम्' इत्येव बोधः स्यात् । सादित्वस्यापि तत्र अन्वयप्रवेशे तु 'केवलिद्रव्यं साद्यपर्यवसितम्' इत्याकारक एव । उभयपदलक्षणायां तु शुद्धद्रव्यविषयको निर्विकल्पक एव बोध इति 'केवलज्ञानदर्शने साद्यपर्यवसिते' इति बोधस्य कथमपि अनुपपत्तिः । अन्त्ये च केवलत्वोपलक्षितात्मद्रव्यमात्रग्रहणे तत्र सादित्वान्वयानुपपत्तिः, केवलिपर्यायग्रहणे च नयविरोधपरिहाराय पर्याये पर्यायोपचार एवाश्रयणीयः स्यादिति समीचीनं द्रव्यार्थादेशसमर्थनम् । नियतोपलक्ष्यतावच्छेदकरूपाभावेऽपि सम्यगुपलक्ष्य विषयकत्वाद्बोधस्वीकारे च 'पर्यायोऽपर्यवसितः' इत्यादेरपि प्रसक्तिः । द्रव्यार्थतया केवलज्ञानकेवलदर्शनयोः अपर्यवसितत्वाभ्युपगमे द्वितीयक्षणेऽपि तयोः सद्भावप्रसक्तिः, अन्यथा द्रव्यार्थत्वायोगात् ।

§११८ तदेवं क्रमाभ्युपगमे तयोरागमविरोध इत्युपसंहरन्नाह –

'संतम्मि केवले दंसणम्मि णाणस्स संभवो णत्थि ।
केवलणाणम्मि य दंसणस्स तम्हा अणिहणाइं ॥" [ सन्मति० २।८ ]

§११९. स्वरूपतो द्वयोः क्रमिकत्वेऽन्यतरकालेऽन्यतराभावप्रसङ्गः, तथा च उक्तवक्ष्यमाणदूषणगणोपनिपातः, तस्मात् द्वावप्युपयोगौ केवलिनः स्वरूपतोऽनिधनावित्यर्थः ।

ग्रन्थकृताऽभेदपक्षस्योपन्यासः –

§१२० इत्थं ग्रन्थकृद्युगपदुपयोगद्वयाभ्युपगमेन क्रमोपयोगवादिनं पर्यनुयुज्य स्वपक्षं दर्शयितुमाह –

"दंसणणाणावरणक्खए समाणम्मि कस्स पुव्वयरो[1] ।
होज्ज य समउप्पाओ हंदि दुवे णत्थि उवओगा ॥" [ सन्मति० २।९ ]

§१२१ सामान्यविशेषपरिच्छेदावरणापगमे कस्य प्रथमतरमुत्पादो भवेत् ?, अन्यतरोत्पादे इतरस्याप्युत्पादप्रसङ्गात्, अन्यतरसामग्र्या अन्यतरप्रतिबन्धकत्वे च उभयोरप्यभावप्रसङ्गात् । 'सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स" इति वचनप्रामाण्यात् प्रथमं केवलज्ञानस्य पश्चात् केवलदर्शनस्योत्पाद इति चेत्; न, एतद्वचनस्य लब्धि-

१ °भावे च प° त । २ पुव्वतरं–सन्मति० । ३ सव्वे उप्पाओ–सन्मति० ।

यौगपद्य एव साक्षित्वात्, उपयोगक्रमाक्रमयोरौदासीन्यात्, यौगपद्येनापि निर्वा-हेऽर्थादर्शनेऽनन्तरोत्पत्त्यसिद्धेः, एकक्षणोत्पत्तिककेवलज्ञानयोरेकक्षणन्यूनाधिकायुष्कयोः केवलिनोः क्रमिकोपयोगद्वयधारया निर्वाहयितुमशक्यत्वाच्च ।

§१२२ अथ ज्ञानोपयोगसामान्ये दर्शनोपयोगत्वेन हेतुतेति निर्विकल्पकसमाधिरूपछद्मस्थकालीनदर्शनात् प्रथमं केवलज्ञानोत्पत्तिः, केवलदर्शने केवलज्ञानत्वेन विशिष्य हेतुत्वाच्च द्वितीयक्षणे केवलदर्शनोत्पत्तिः, एवञ्च क्रमिकसामग्रीद्वयसम्पत्त्या क्रमिकोपयोगद्वयधारा-निर्वाह इति, एकक्षणन्यूनाधिकायुष्कयोस्त्वेकक्षणे केवलज्ञानोत्पत्त्यस्वीकार एव गतिरिति चेत्; न, "दंसणपुव्वं नाणं" [सन्मति० २।२२] इत्यादिना तथाहेतुत्वस्य प्रमाणाभावेन निरसनीयत्वात्, उत्पन्नस्य केवलज्ञानस्य क्षायिकभावत्वेन नाशायोगाच्च । न च मुक्तिसमये क्षायिकचारित्रनाशवदुपपत्तिः, क्षायिकत्वेऽपि तस्य योगस्थैर्यनिमित्तकत्वेन निमित्तनाशनाश्यत्वात्, केवलज्ञानस्य चानैमित्तिकत्वात् उत्पत्तौ ह्यसौ आवरणक्षयातिरिक्तनिमित्तानपेक्षत्वेनैव तस्य स्वतन्त्रप्रमाणत्वव्यवस्थितेः, अन्यथा 'सापेक्षमसमर्थम्' इति न्यायादप्रामाण्यप्रसङ्गात् । एतेन—केवलदर्शनसामग्रीत्वेन स्वस्यैव स्वनाशकत्वमिति केवलज्ञानक्षणिकत्वम्—इत्यपि अपास्तम्, अनैमित्तिके क्षणिकत्वायोगात्, अन्यथा तत्त्वत एव तत्तत्क्षणवृत्तिकार्ये नाशक इति सर्वत्रैव ऋजुसूत्रनयसाम्राज्यस्य दुर्निवारत्वादिति किमतिपल्लवितेन ? । नन्वियमनुपपत्तिः क्रमोपयोगपक्ष एवेत्यक्रमौ द्वावुपयोगौ स्वामित्यादावेव मल्लवादी, "मन्नइ समयमेक्कक्कम्मसुत्तावरीओ" इति । तदेकोपयोगवादी ग्रन्थकृत् सिद्धान्तयति 'इन्दि' ज्ञापयते द्वावुपयोगौ नैकदेति, सामान्यविशेषपरिच्छेदात्मकत्वात् केवलज्ञानस्य, यदेव ज्ञानं तदेव दर्शनमित्यत्रैव निर्भरः, उभयहेतुसमाजे समूहालम्बनोत्पादस्यैव अन्यत्र दृष्टत्वात् नात्र अपरिदृष्टकल्पनावकाश इति भावः ।

अभेदपक्षे एव सर्वज्ञतासम्भवस्य समर्थनम्—

§१२३ असिद्धवादे केवलिनः सर्वज्ञतासम्भव इत्याह—

'जइ सव्वं सायारं जाणइ एक्कसमएण सव्वण्णू ।
जुज्जइ सयावि एवं अहवा सव्वं ण याणाइ ॥' [सन्मति० २।१ ]

§१२४ यदि सर्वं सामान्यविशेषात्मकं जगत् साकारं तत्तज्जातिव्यक्तिवृत्तिधर्मविशिष्टम्, साकारमिति क्रियाविशेषणं वा—निरवच्छिन्नतत्तज्जातिप्रकारतानिरूपितव्यक्तिनिष्ठविशेष्यतासहितं परस्परं यावद्द्रव्यपर्यायनिरूपितविषयतासहितं वा यथा स्यात्तथा वेत्तीत्यर्थः । अथवा इत्येतद्विपरीते सर्वं न जानाति सर्वं न जानीयादेकदेशोपयोगवर्तित्वात् मतिश्रुतनिवदित्यर्थः । तथा च केवलज्ञानमेव केवलदर्शनमिति सिद्धम् ।

अव्यक्तदर्शनस्य केवलिन्यसम्भवोपदर्शनम्—

§१२५ अव्यक्तत्वादपि पृथग्दर्शनं केवलिनि न सम्भवतीत्याह—

'परिसुद्धं सायारं अवियत्तं दंसणं अणायारं ।
ण य खीणावरणिज्जे जुज्जइ सुवियत्तमवियत्तं ॥' [सन्मति० २।११]

---

१ °हेऽर्थादर्शने° त । २ निर्वेषा हे° अ । निर्वोढुं° मु । ३ °निर्वाह एव° अ ब । ४ तत्र च° त । ५ °त्वे सति° त । ६ °क्षणोत्पत्ति° त । ७ °न्यतरैव त । ८ °तत्त्वानि° मु अ ब ।

§१२६ ज्ञानस्य हि व्यक्तता रूपम्, दर्शनस्य पुनरव्यक्तता। न च क्षीणावरणेऽर्हति व्यक्तताऽव्यक्तते युज्येते, ततः सामान्यविशेषज्ञेयसंस्पर्श्युभयैकस्वभाव एवायं केवलिप्रत्ययः। न च ग्राह्यद्वित्वात् ग्राहकद्वित्वमिति सम्भावनापि युक्ता, केवलज्ञानस्य ग्राह्यानन्त्येनानन्त्यापत्तेः। विषयभेदकृतो न ज्ञानभेद इत्यभ्युपगमे तु दर्शनपार्थक्ये का प्रत्याशा?, आवरणद्वयक्षयाद्युभयैकस्वभावस्यैव कार्यस्य सम्भवात्। न च एकस्वभावप्रत्ययस्य शीतोष्णस्पर्शवत् परस्परविभिन्नस्वभावद्वयविरोधः, दर्शनस्पर्शनशक्तिद्वयात्मकैकदेवदत्तवत् स्वभावद्वयात्मकैकप्रत्ययस्य केवलिन्यविरोधात्। ज्ञानत्वदर्शनत्वधर्माभ्यां ज्ञानदर्शनयोर्भेदः, न तु धर्मिभेदेनेति परमार्थः। अत एव तदावरणभेदेऽपि स्याद्वाद एव। तदुक्तं स्तुतौ ग्रन्थकृतैव—

"चक्षुर्दर्शनविज्ञानं परमाण्वौष्ण्यरौक्ष्यवत्।
तदावरणमप्येकं न वा कार्यविशेषतः॥" [निश्चय० ८] इति।

§१२७ परमाणावौष्ण्यरौक्ष्यस्पर्शद्वयसमावेशवच्चाक्षुषे ज्ञानत्वदर्शनत्वयोः समावेश इत्यर्थः। इत्थं च चाक्षुषज्ञानदर्शनावरणकर्मापि परमार्थत एकम्, कार्यविशेषत उपाधिभेदतो वा नैकमिति सिद्धम्। एवमवधिकेवलस्थलेऽपि द्रष्टव्यम्। तदाह—

"चक्षुर्वदिष्टविषयाव्याप्तिरवधिज्ञानकेवले।
शेषवृत्तिविशेषात्तु ते मते ज्ञानदर्शने॥" [द्वा० १० २०] इति।

§१२८ चक्षुर्वदचाक्षुषविषयाव्याप्तिः स्पृष्टज्ञानाभावः अस्पृष्टज्ञाने इति यावत्, भावाभावरूपे वस्तुनि अभावत्वाभिधानमपि दोषानावहम्। शेषा द्वयोरस्पृष्टज्ञानानि ताभ्यो विशेषः स्पृष्टताविशेषेण वक्ष्यमाणरीत्या स्पृष्टविषयवृत्तित्वम्यञ्जन, तस्मात्ते अवधिकेवले ज्ञानपदेन दर्शनपदेन च वाच्ये इत्यक्षरार्थः।

अभेदपक्षादन्यत्र ज्ञात-दृष्टभाषित्वाभावः—

§१२९. क्रमाक्रमोपयोगद्वयपक्षे भगवतो यदाभाषत्वे तदाह—

"अद्दिट्ठं अण्णायं च केवली एव भासइ सया वि।
एगसमयम्मि हंदी वयणवियप्पो ण संभवइ॥" [सन्मति० २।१२] इति।

§१३० आद्यपक्षे ज्ञानकालेऽदृष्टम्, दर्शनकाले चाज्ञातम्, द्वितीयपक्षे च सामान्यांशेऽज्ञातं विशेषांशे चादृष्टम्, एवमुक्तप्रकारेण केवली सदा भाषेत, ततः 'एकस्मिन् समये ज्ञातं दृष्टं च भगवान् भाषते' इत्येव वचनस्य विकल्पो विभागो भवद्दर्शने न सम्भवतीति गाथार्थः। न चान्यतरकालेऽन्यतरोपलक्षणात् उपसर्जनतया विषयान्तरग्रहणात् उक्तवचनविकल्पोपपत्तिः, एवं सति भ्रान्तच्छद्मस्थेऽपि तथाप्रयोगप्रसङ्गात्। यदा कदाचित् यद्भाविक्रया ज्ञानदर्शनविषयस्य पदार्थस्य तदुदानुप्रवेशादिति मन्तव्यम्।

---

१ परमाण्वौष्ण्यरौक्ष्यवत्(?)-निश्चय०। २ °मिष्टे-निश्चय०। ३ °दर्शनी भट° त। ४ °भिति रूप्। दर° त। ५ °भाषत भाषा° त। ६ °योऽस्ताम° अ ब त। ७ °तदुत्त° अ ब मु।

§१३१ तथा च सर्वज्ञत्वं न सम्भवतीत्याह–

"अण्णायं पासंतो अद्दिट्ठं च अरहा वियाणंतो ।
किं जाणइ किं पासइ कह सव्वण्णु त्ति वा होइ ॥" [सन्मति० २।१३]

§१३२ अज्ञातं पश्यन् अदृष्टं च जानानः किं जानाति किं वा पश्यति? । न किञ्चिदित्यर्थः । कथं वा तस्य सर्वज्ञता भवेत्? । न कथमपीत्यर्थः ।

समसङ्ख्यकविषयकत्वेनापि केवलयोरैक्यम्–

§१३३ ज्ञानदर्शनयोर्विषयविषयैकसंख्याप्रसिद्धत्वादपि एकत्वमित्याह–

'केवलणाणमणंतं जहेव तह दंसणं पि पण्णत्तं ।
सागारग्गहणाहि य णियमपरित्तं अणागारं ॥" [सन्मति० २।१४]

§१३४ यदेकत्वं ज्ञानदर्शनयोर्न स्यात् तदाऽल्पविषयत्वाद्दर्शनमनन्तं न स्यादिति "अनन्ते केवलज्ञाने अनन्ते केवलदर्शने" इत्यागमविरोधः प्रसज्येत । दर्शनस्य हि ज्ञानाभेदे साकारग्रहणादनन्तविशेषपर्यायविज्ञानादनाकारं सामान्यमात्रावलम्बि केवलदर्शनं यतो नियमेनैकान्तेनैव परीतमल्पं भवतीति कुतो विषयाभावादनन्तता । न च 'उभयोस्तुल्यविषयताविशेषेऽपि मुख्योपसर्जनभावकृतो विशेषः' इति वाच्यम्, विशेषणविशेष्यभावेन तदवगाहनियतज्ञानित्वमन्वयावच्छिन्नविषयतया वा तत्र क्रमवादात् । आपेक्षिकस्य च तस्यासत्त्वादिवृत्त्यावेधाविरोधात् । एतच्च निरूपिततत्त्वम् "ज च जे से भावे" [ध्यान० २८२] इत्यादिनिर्युक्तिगाथाया नयभेदेन व्याख्यायते अनेकान्तव्यवस्थायाम् अस्माभिः । अक्रमोपयोगद्वयवादी तु प्रकृतगाथायां साकारे यद्ग्रहणं दर्शनं तस्य नियमोऽल्पत्वसंभावो यावन्तो विशेषास्तावन्त्यस्तत्सम्बन्धोपाधिरूपाणि जातिरूपाणि वा सामान्यानीति हेतोस्तेनाप्यनन्तमित्यक्षरप्रक्षेपेण व्याचष्टे ।

क्रमवादिकृतागमविरोधादिपरिहारस्य दूषणम्–

§१३५ क्रमवादे ज्ञानदर्शनयोरपर्यवसितत्वादिकं नोपपद्यत इति यदुक्तं तत्राक्षेपपुरःसरं समाधत्ते–

"भण्णइ जह चउणाणी जुज्जइ णियमा तहेव एयं पि ।
भण्णइ ण पंचणाणी जहेव अरहा तहेयं पि ॥' [सन्मति० २।१५]

§१३६ भण्यते आक्षिप्यते यथा क्रमोपयोगपक्षेऽपि मत्यादिचतुर्ज्ञानी छाद्मस्थिकभावस्यपर्यवसितचतुर्ज्ञानो ज्ञातृत्वमापी ज्ञाता द्रष्टा च नियमेन युज्यते । तथैतस्यापि एकत्वादिना यदपर्यवसितत्वादि क्रमोपयोगे केवलिनि प्रेर्यते, तदपि सार्वदिककेवलज्ञानदर्शनशक्तिसमन्वयात् उपपद्यत इत्यर्थः । भण्यते अत्रोत्तरं दीयते–यथैवार्हन् पञ्चज्ञानी, तथैवैतदपि क्रमवादिना यदुच्यते–भेदतो ज्ञानस्य दर्शनस्य च–तदपि न भवतीत्यर्थः । मत्याद्यावरणक्षयेऽपि एकदेशज्ञानिनो मतिज्ञानादेरिव, दर्शनावरणक्षयेऽपि तदेकदर्शनस्य

१ किंचिदपीतिभावः कथं त । २ ॰णिर्दं तस्य मु । ३ ॰गोणि ज्ञानपदोः मे॰ त । ४ ॰भाव. गुणव दृति । म॰ त । ५ ॰पर्याद पदे॰ त ।

केवलिनि भेदेनानुपपत्तेरिति भावः । इयांस्तु विशेषः – यदभेदेनापि केवलज्ञाने दर्शन-संज्ञा सिद्धान्तसम्मता, न तु मतिज्ञानादिसंज्ञेति, तत्र हेतू अन्वयोपपत्त्यनुपपत्ती एव द्रष्टव्ये । अयं च प्रौढिवादः । वस्तुतः क्रमवादे यदा जानाति तदा पश्यति इत्यादेरनुप-पत्तिरेव, आश्रयत्वसंबन्धस्याताद्यत्वात् । लब्धेस्तद्दर्शत्वे तु घटादर्शनवेलायामपि 'घटं पश्यति' इति प्रयोगप्रसङ्गात्, घटदर्शनलब्धेस्तदानीमपि विद्यमानत्वात् । 'चक्षुष्मान् सर्वं पश्यति, न त्वन्धः' इत्यादौ तु तादृश्या लब्धेर्योग्यताया वाऽऽख्यातार्थत्वमभ्युपगम्यत एव, न तु सर्वत्राप्ययं न्यायः, अतिप्रसङ्गात् । न च सिद्धान्ते विना निक्षेपविशेषमप्रसिद्धार्थे पदवृत्तिरवधार्यते, षट्षष्टिसागरोपमस्थितिकत्वादिकमपि मतिज्ञानादेर्लब्ध्यपेक्षयैवेति दुर्वचम्, एकस्या एव क्षयोपशमरूपलब्धेस्तावत्कालमनवस्थानात्, द्रव्याद्यपेक्षया विचि-त्रापरापरक्षयोपशमसन्तानस्यैव प्राप्त्युपगमात् । किन्तु एकजीवावच्छेदेन अज्ञानातिरि-क्तविरोधिसामग्र्यसमवहितषट्षष्टिसागरोपमक्षणत्वव्याप्यसमभ्यार्तीयोत्पत्तिकत्वे सति तद्-विलक्षणानुत्पत्तिकत्वसजातीयत्वरूपं तत् पारिभाषिकमेव वक्तव्यम्, एवमन्यदप्यूह्यम् ।

आवरणक्षयजत्वादिना केवलज्ञानदर्शनयोरैक्यम् –

§१३७ क्रमेण युगपद्वा परस्परनिरपेक्षस्वविषयपर्यवसितज्ञानदर्शनोपयोगौ केवलिन्य सर्वार्थत्वात् मत्यादिज्ञानचतुष्टयवत् स्त इति दृष्टान्तभावनापूर्वमाह –

"पण्णवणिज्जा भावा समत्तसुयनाणदंसणाविसओ ।
ओहिमणपज्जवाण य अण्णोण्णविलक्खणा विसओ ॥
तम्हा चउविभागो जुज्जइ ण उ णाणदंसण जिणाणं ।
सयलमणावरणमणंतमक्खयं केवलं जम्हा ॥" [ सन्मति० २।१६,१७ ] इति ।

§१३८ प्रज्ञापनीयाः शब्दाभिलाप्या भावा द्रव्यादयः समस्तश्रुतज्ञानस्य द्वादशाङ्गा-त्मकस्य दर्शनाया दर्शनप्रयोजिकायास्तदुपजाताया बुद्धेः विषय आलम्बनम्, मतेरपि त एव शब्दावसिता विषया द्रष्टव्याः, शब्दपरिकर्मिताहितक्षयोपशमजनितस्य ज्ञानस्य यथो-क्तभावविषयस्य मतित्वात् मतिश्रुतयोरसर्वपर्यायसर्वद्रव्यविषयतया तुल्यार्थत्वप्रतिपाद-नाय, अवधिमनःपर्याययोः पुनरन्योन्यविलक्षणा भावा विषयः – अवधे रूपिद्रव्यमात्रम्, मनःपर्यायस्य च मन्यमानानि द्रव्यमनांसीत्यसर्वार्थान्यतानि । तस्मात् चतुर्णां मत्यादीनां विभागो युज्यते, तत्तत्क्षयोपशमप्रत्ययभेदात्, न तु जिनानां ज्ञानदर्शनयोः । 'नाणदं-सण जि' अविभक्तिको निर्देशः प्राकृतत्वात् । कुतः पुनरेतदित्याह – यस्मात् केवलं सकलं परिपूर्णम् । तदपि कुतः ? । यतोऽनावरणम्, नहि अनावृतमसकलविषयं भवति । न च प्रदीपेन व्यभिचारः, यतोऽनन्तमनन्तार्थग्रहणप्रवणम् । तदपि कुतः ? । यतोऽक्षयम्, क्षयो हि विरोधिसजातीयेन गुणेन स्यात्, तदभावे तस्याक्षयत्वम्, ततश्च अनन्तत्वमनवद्यमिति भावः । तस्मात् अक्रमोपयोगद्वयात्मक एक एव केवलोपयोगः । तत्रैकत्वं व्यक्त्या, द्व्यात्मकत्वं च नृसिंहत्ववज्जात्यन्तररूपत्वमित्येके । भावे द्वित्वेऽप्यस्त्वद्वयाप्य

१ । पूर्वं क्रमोत्पन्नत्वाया [illegible] एव [illegible]॰ त । २ ॰[illegible]॰ त । ३ ॰[illegible]गुणे॰ त ।

"चक्खुअचक्खुअवहिकेवलाण समयम्मि दंसणवियप्पा ।
परिपढिया[1] केवलनाणदंसणा तेण[2] ते अणण्णा ॥" [ सन्मति० २।२० ]

§१४४ स्पष्टा । चक्षुरादिज्ञानवदेव केवलज्ञानमध्ये पाठात् ज्ञानमपि, दर्शनमध्ये पाठाच्च दर्शनमपीति परिभाषामात्रमेतदिति ग्रन्थकृतस्तात्पर्यम् ।

अस्त्युपयोगद्वयस्य केवलोपयोगस्य द्विरूपत्वमित्येकदेशिनः—

§१४५. मतिज्ञानादेः क्रम इव केवलस्याक्रमेऽपि सामान्यविशेषाख्यद्विरूपैकोपयोगरूपतया ज्ञानदर्शनत्वमित्येकदेशिमतमुपन्यस्यति—

"दंसणमुग्गहमेत्तं घडोत्ति निव्वण्णणा हवइ नाणं ।
जह एत्थ केवलाण वि विसेसणं एत्तियं चेव" ॥ [ सन्मति० २।२१ ]

§१४६ अवग्रहमात्रं मतिरूपे बोधे दर्शनम्, इदं तदित्यव्यपदेश्यम्, घट इति निश्चयेन वर्णना तदाकाराभिलाप इति यावत् । कारणे कार्योपचाराच्च घटाकाराभिलापजनकं घटे मतिज्ञानमित्यर्थः । यथाऽत्रैवं[5] तथा केवलयोरप्येतावन्मात्रेण विशेषः । एकमेव केवलं सामान्यांशे दर्शनं विशेषांशे च ज्ञानमित्यर्थः ।

एकदेशिनैव ज्ञानदर्शनयोः क्रमकृतभेदनिरासः—

§१४७ एकदेश्येव क्रमिकभेदपक्षं दूषयति—

"दंसणपुव्वं नाणं, नाणनिमित्तं तु दंसणं नत्थि ।
तेण सुविणिच्छियामो दंसणनाणाण अण्णत्तं ॥" [ सन्मति २।२२ ]

§१४८ दर्शनपूर्वं ज्ञानमिति छद्मस्थोपयोगदशायां प्रसिद्धम् । सामान्यमुपलभ्य हि पश्चात् सर्वो विशेषमुपलभत इति, ज्ञाननिमित्तं तु दर्शनं नास्ति क्वापि, तथाऽप्रसिद्धेः । तेन सुविनिश्चिनुमः 'दंसणनाणा' इति दर्शनज्ञाने नाऽन्यत्वं न क्रमापादितभेदं केवलिनि भजत इति शेषः । क्रमाभ्युपगमे हि केवलिनि नियमाज्ज्ञानोत्तरं दर्शनं वाच्यं, सर्वासां लब्धीनां साकारोपयोगप्राप्यत्वेन पूर्वं ज्ञानोत्पत्युपगमौचित्यात् । तथा च ज्ञानहेतुकमेव केवलिनि दर्शनमभ्युपगन्तव्यं, तच्चात्यन्तादर्शनव्याहतमिति भावः । यत्तु क्षयोपशमनिबन्धनक्रमस्य केवलिन्यभावेऽपि पूर्वं क्रमदर्शनात् तज्जातीयतया ज्ञानदर्शनयोरन्यत्वमिति टीकाकृद्व्याख्यानं, तत्स्वभावमेवतात्पर्येण सम्भवदपि दर्शने ज्ञाननिमित्तत्वनिषेधानति प्रयोजनतया कथं शोभत इति विचारणीयम् ।

§१४९. ननु यथा परेषां कल्पितः क्रमो वर्णनिष्ठो बुद्धिविशेषजनकतावच्छेदकोऽस्माकं च भिन्नाभिन्नपर्यायविशेषरूपः, तथा केवलज्ञानदर्शननिष्ठस्तावत्कः क्रम एवावरणक्षयजन्यतावच्छेदकः स्यादिति भोकानुपपत्तिरिति चेत्; न, वर्णक्रमस्य क्रमवत्क्षयोपशमप्रयोज्यस्य सुवचत्वेऽप्यक्रमिकावरणक्षयप्रयोज्यस्य केवलस्योपयोगक्रमस्य दुर्वचत्वादनन्यगत्याऽक्रमि

१ °पढिया—सम्मति० । २ तेण ते अण्णा—सम्मति० । ३ °दूरयोः° मु । ४ °भ्य इत्यर्थः च° त । ५ अत्र 'यथाऽत्रैवम् तथा' इति पाठ नास्ति—सं० । ६ °तात्पर्यकमपि दर्श° त ।

कादप्यावरणद्वयक्षयात् क्रमवदुपयोगोत्पत्त्यभ्युपगमे च तथाविधकारणाभावादविकलकारणस्यापि ज्ञानोपयोगान्तरधाराया अविच्छेदाच्च "जुगवं दो णत्थि उवओगा" [ आव० ९७९ ] इति वचनानुपपत्तिः । न च 'ज्ञानस्य दर्शनभेदापाद्यान्तरपरिणामलक्षणो ध्वंस इत्युपयोगायौगपद्यम्' साम्प्रतम्, सादनन्तपर्यायविशेषरूपध्वंसस्यैवावस्थितिविरोधित्वाद्दर्शनान्तरपरिणामस्य ध्वंसत्वाभावात्, अन्यथा तत्तत्संयोगविभागादिमात्रेणानुभूयमानघटादिस्थित्युच्छेदापत्तेः । न च – 'जुगवं दो णत्थि उवओगा' इत्यस्योपयोगयोर्युगपदुत्पत्तिनिषेध एव तात्पर्यम्, न तु युगपदवस्थानेऽपीत्युपयोगद्वयधारायां नाशकारणाभावेन सहावस्थानेऽपि न दोष इति – साम्प्रतम्, अक्रमवादिनाप्येवं क्रमावच्छिन्नोपयोगद्वययौगपद्यनिषेधपरत्वस्य वक्तुं शक्यत्वात्, सूत्रार्थस्योभयसाधारण्ये यदेव ज्ञानं तदेव दर्शनमित्यस्मदुक्तस्यैव युक्तत्वादिति दिक् ।

एकदेशीयमतस्य निरासः –

§१५०. मतिज्ञानमेवावग्रहात्मना दर्शनम्, अपायात्मना च ज्ञानमिति[1] यदुक्तं स्वान्वयमार्गमेकदेशिना तद्दूषयन्नाह –

'जइ उग्गहमित्तं दंसणं ति मण्णसि विसेसिया णाणं ।
मइणाणमेव दंसणमेवं सइ होइ निप्फण्णं ॥" [ सन्मति० २।२१ ]

§१५१ यदि मतिरेवावग्रहरूपा दर्शनम्, विशेषिता ज्ञानमिति मन्यसे तदा मतिज्ञानमेव दर्शनमित्येवं सति प्राप्तम् । न चैतद्युक्तम्, "स द्विविधोऽष्टचतुर्भेदः" [ तत्त्वार्थ० २।९ ] इति सूत्रविरोधात्, मतिज्ञानस्याष्टाविंशतिभेदोक्तिविरोधाच्च ।

"एवं सेसिंदियदंसणम्मि नियमेण होइ ण य जुत्तं ।
अह तत्थ णाणमित्तं घेप्पइ चक्खुम्मि वि तहेव ॥" [ सन्मति० २।२४ ]

§१५२ एवं शेषेन्द्रियदर्शनेष्वप्यवग्रह एव दर्शनमित्यभ्युपगमेन मतिज्ञानमेव तदिति स्यात्, तच्च न युक्तम्, पूर्वोक्तदोषानतिवृत्तेः । अथ तेषु श्रोत्रादिष्विन्द्रियेषु दर्शनमपि मतिज्ञानमेव युज्यते, मात्रशब्दस्य दर्शनव्यवच्छेदकत्वात्, तद्व्यवच्छेदश्च तथाव्यवहाराभावात्, श्रोत्रज्ञानं घ्राणज्ञानमित्यादिव्यपदेश एव हि तत्रोपलभ्यते, न तु श्रोत्रदर्शनं घ्राणदर्शनमित्यादिव्यपदेशः क्वचिदागमे प्रसिद्धः; तर्हि चक्षुष्यपि तथैव पृथक् चक्षुर्ज्ञानमिति न तु चक्षुर्दर्शनमिति । अथ तत्र दर्शनम्, इतरत्रापि तथैव पृथक् युक्तेस्तुल्यत्वात् ।

पर्यायपदस्य परिभाषणम् –

§१५३ कथं तर्हि श्रोत्रे चक्षुर्दर्शनादिव्यवहार इत्यत आह –

'णाणमपुट्ठे [ यो ] अविसए य अत्थम्मि दंसणं होइ ।
मोत्तूण लिंगओ जं अणागयाईयविसएसु ॥" [ सन्मति० २।२५ ]

§१५४ अस्पृष्टेऽर्थे चक्षुषा य उदेति प्रत्ययः स ज्ञानमेव सच्चक्षुर्दर्शनमित्युच्यते,

१ °ति स्वान्वयमार्गमेकदेशिमतं दूषयन्नाह-त० ।

न्द्रियाणामविषये च परमाण्वादावर्थे मनसा य उदेति प्रत्ययः स ज्ञानमेव सदचक्षुर्दर्शनमित्युच्यते । अनुमित्यादिरूपे मनोजन्यज्ञानेऽतिप्रसङ्गमाशङ्क्याह – अनागतातीतविषयेषु यत्किञ्चिज्ज्ञानमुदेति 'अयं काल आसन्नमभिव्यक्तवृष्टिकस्तथाविधमेघोन्नतिमत्त्वात्, अयं देश आसन्नवृष्टिमेघः पूर्वविशेषवत्त्वात्' इत्यादिरूपं तदनुक्त्वा । इदमुपलक्षणं भावनान्यज्ञानातिरिक्तपरोक्षज्ञानमात्रस्य, तस्यास्पृष्टाविषयार्थत्वेऽपि दर्शनत्वेनाव्यवहारात् ।

मनःपर्याये दर्शनत्वस्यातिप्रसङ्गाभावः –

§१५५ यद्यस्पृष्टाविषयार्थज्ञानं दर्शनमभिमतं तर्हि मनःपर्यायज्ञानेऽतिप्रसङ्ग इत्याशङ्क्य समाधत्ते –

"मणपज्जवणाणं दंसणं ति तेणेह होइ ण य जुत्तं ।
भण्णइ णाणं णोइन्दियम्मि ण घडादओ जम्हा ॥" [सन्मति० २।२६]

§१५६ एतेन लक्षणेन मनःपर्यायज्ञानमपि दर्शनं प्राप्तम्, परकीयमनोगतानां घटादीनामालम्ब्यानां तत्राऽस्पृष्टत्वेनाऽस्पृष्टेऽविषये च घटादावर्थे तस्य भावात् । न चैतद्युक्तम्, आगमे तस्य दर्शनत्वेनाऽपाठात् । भण्यतेऽत्रोत्तरम् – नोइन्द्रिये मनोवर्गणालम्बे मनोविशेषे प्रवर्तमानं मनःपर्यायबोधरूपं ज्ञानमेव, न दर्शनम्, यस्मादस्पृष्टा घटादयो नाऽस्य विषय इति शेषः । नित्यं तेषां लिङ्गानुमेयत्वात् । तथा चाऽऽगमः – "जाणइ बज्झेऽणुमाणेणं" [विशेषा० गा० ८१४] त्ति, मनोवर्गणास्तु परात्मगता अपि स्वात्मवदात्मस्पृष्टप्रतीता एवेति न तदंशेऽपि दर्शनत्वप्रसङ्गः । परकीयमनोगताऽर्थाकारविकल्प एवाऽस्य ग्राह्यः, तस्य बोधरूपत्वेऽपि छाद्मस्थिकोपयोगस्याऽपरिपूर्णार्थग्राहित्वान्न मनःपर्यायज्ञाने दर्शनसम्भव इत्यप्याहुः ।

अस्पृष्टाविषयकज्ञानाद्दर्शनस्यापृथक्त्वम् –

§१५७ किञ्च –

"मइसुयनाणणिमित्तो छउमत्थे होइ अत्थउवलम्भो ।
एगयरम्मि वि तेसिं ण दंसणं दंसणं कत्तो ॥" [सन्मति० २।२७]

§१५८ मतिश्रुतज्ञाननिमित्तः छद्मस्थानामर्थोपलम्भ उक्त आगमे । तयोरेकतरस्मिन्नपि न दर्शनं सम्भवति । न चाऽस्पृष्टो दर्शनम्, तस्य ज्ञानात्मकत्वात् । ततः कुतो दर्शनम् ? नास्तीत्यर्थः ।

श्रुतज्ञानस्य दर्शनत्वाभावः –

§१५९. ननु श्रुतमस्पृष्टेऽर्थे किमिति दर्शनं न भवेत् ? तत्राह –

"जं पच्चक्खग्गहणं ण इन्ति सुयनाणसम्मिया अत्था ।
तम्हा दंसणसद्दो ण होइ सयले वि सुयनाणे ॥" [सन्मति० २।२८]

§१६० यस्माच्छ्रुतज्ञानप्रमिता अर्थाः प्रत्यक्षग्रहणं न यान्ति, अक्षमक्षेव व्यवहारतः प्रत्यक्षत्वात्, तस्मात् सकलेऽपि श्रुतज्ञाने दर्शनशब्दो न भवति । तथा च व्यञ्जनावग्र-

---

१ °मित्युच्यते तथा मनः° त । २ °माणेणं–विशेषा° ।

ग्रहाविषयार्थप्रत्यक्षत्वमेव दर्शनत्वमिति पर्यवसन्नम् । प्रत्यक्षपदादेव श्रुतज्ञानवदनुमित्यादेर्व्यावृत्तौ परोक्षभिन्नत्वे सतीति विशेषणं न देयम्, 'मुणइ लिङ्गओ जं' इत्युक्तसाम्येनैव तात्पर्यं द्रष्टव्यम् । इत्थं चाऽचक्षुर्दर्शनमित्यत्र नञः पर्युदासार्थकत्वादचक्षुर्दर्शनपदेन मानसदर्शनमेव ग्राह्यम्, अप्राप्यकारित्वेन मनस एव चक्षुःसदृशत्वात् घ्राणदर्शनादीति सर्वमुपपद्यते ।

अवधिज्ञानमेवावधिदर्शनम्–

§१६१ तथा च 'अवधिदर्शनमपि कथं सङ्गच्छते ?, तस्य व्यञ्जनावग्रहाविषयार्थग्राहित्वेऽपि व्यवहारतः प्रत्यक्षत्वाभावात्' इति शङ्कायाः–प्रत्यक्षपदस्य व्यवहारनिश्चयसाधारणप्रत्यक्षार्थत्वात्, अवधिज्ञानस्य च नैश्चयिकप्रत्यक्षत्वाव्याहतेः–परिहारमभिप्रयन्नाह–

"जं अप्पुट्ठा भावा ओहिण्णाणस्स होंति पच्चक्खा ।
तम्हा ओहिण्णाणे दंसणसद्दो वि उवउत्तो ॥" [ सन्मति० २।२९ ]

§१६२ स्पष्टा । उपयुक्ता सम्यनिमित्तावकाशः ।

एकस्यैव केवलोपयोगस्य द्व्यात्मकत्वम्–

§१६३ केवलज्ञानेऽपीदं लक्षणमव्याहतमित्याह–

"जं अप्पुट्ठे भावे जाणइ पासइ य केवली नियमा ।
तम्हा तं णाणं दंसणं च अविसेसओ सिद्धं ॥" [ सन्मति० २।३० ]

§१६४ यतोऽस्पृष्टान् भावान्नियमेनाऽऽत्मतया केवली चक्षुष्मानिव पुरःस्थितं जानाति पश्यति चोभयप्राधान्येन, तस्मात्तत्केवलज्ञानं दर्शनं चाविशेषत उभयाभिधाननिमित्तसाविशेषात् सिद्धम् । मनःपर्यायज्ञानस्य तु व्यञ्जनावग्रहाविषयार्थकप्रत्यक्षत्वेऽपि बाह्यविषये व्यभिचारेण स्वग्राह्यतावच्छेदकावच्छेदेन प्रत्यक्षत्वाभावान्न दर्शनत्वमिति निष्कर्षः ।

§१६५. अत्र यद्धीकाकृता 'प्रमाणप्रमेययोः सामान्यविशेषात्मकत्वेऽप्यप्रतीतावरणे युगपदुभयस्वभावो बोधः, छद्मस्थाऽवस्थायां स्वपगतावरणत्वेन दर्शनोपयोगसमये ज्ञानोपयोगाभावादप्राप्यकारिनयनमनःप्रभवाऽर्थावग्रहादि, मतिज्ञानोपयोगप्राक्काले चक्षुरचक्षुर्दर्शनं, अवधिज्ञानोपयोगप्राक्काले चावधिदर्शनमाविर्भवति' इति व्याख्यातं तदर्धजरतीन्यायमनुहरति, प्राचीनग्रन्थमात्रानुरोधे श्रोत्रादिज्ञानानां प्रागपि दर्शनाऽभ्युपगमस्यावर्जनीयत्वात्, व्यञ्जनावग्रहार्थावग्रहान्तराले दर्शनानुपलम्भात्, तदनिर्देशाच्च, असङ्ख्येयसामयिकव्यञ्जनावग्रहान्त्यक्षणे "ताहे हुं ति करेइ" [नन्दी सू० ३५] इत्यागमेनार्थावग्रहोत्पत्तेरेव भणनात्, व्यञ्जनावग्रहकाले दर्शनपरिकल्पनस्य चात्यन्ताऽनुचितत्वात् । तथा सति तत्सन्निपातमभिकर्षादपि निकृष्टत्वेनानुपयोगित्वप्रसङ्गेन, प्राप्यकारीन्द्रियस्थानेऽपि दर्शनानुपगमे चान्यत्रापि विभागकल्पने न किञ्चित्प्रमाणम्, 'नाणमपुट्ठे' इत्यादिना ज्ञानादर्शनयोर्दर्शनस्याभावप्रतिपादनात् 'चक्षुर्वर्जितविषयाख्यातिः' इत्यादिस्तुतिग्रन्थवाक्यतयाऽपि तथैव भारसाच्च । छद्मस्थज्ञानोपयोगे दर्शनोपयोगत्वेन हेतुत्वे तु चक्षुष्मत्

१ ह० ४।४ । ११ । २ "न वस्तुत्वं दर्शनं त । ३ "भिन्नार्थे भा त । ४ "योगस्य' भ व मु । ५ "निवृत्त" त । ६ ह० ४।४ । ११ । ७ ह० ११४ १५ । अज्ञेयानि तथैव त ।

दर्शनं नान्यत्रेति कथं श्रद्धेयम् ? । तस्माच्छ्रीसिद्धसेनोपज्ञनव्यमते न क्वापि ज्ञानादर्शनस्य कालभेदः । किन्तु स्वग्राह्यतावच्छेदकावच्छेदेन व्यञ्जनावग्रहाऽविषयीकृतार्थग्राहकत्वमेव दर्शनमिति फलितम् ।

§१६६ यदि च चाक्षुषादावपि ज्ञानसामग्रीसामर्थ्यप्राप्तवर्तमानकालार्थांशे मितिमात्रांशे च न दर्शनत्वव्यवहारस्तदाऽविषयताविशेष एव दर्शनत्वम् । स च क्वचिदंशे योग्यताविशेषजन्यताऽवच्छेदकः, क्वचिच्च भावनाविशेषजन्यताऽवच्छेदकः, केवले च सर्वांशे आवरणक्षयजन्यताऽवच्छेदक इति प्रतिपत्तव्यम् । न च 'अर्थेनैव धियां विशेष इति न्यायादर्थाऽविशेषे ज्ञाने विषयताविशेषाऽसिद्धिः' इति शङ्कनीयम्, अर्थेऽपि ज्ञानानुरूपस्वभावपरिकल्पनात्, अर्थाऽविशेषेऽपि परैः समूहालम्बनाद्विशिष्टज्ञानस्य व्यावृत्तये प्रकारिताविशेषस्याऽभ्युपगमाच्च । न हि तस्य तत्र भासमानवैशिष्ट्यप्रतियोगिज्ञानत्वमेव निरूपकविशिष्टज्ञानत्वं वक्तुं शक्यम्, दण्डपुरुषसंयोगा इति समूहालम्बनेऽतिप्रसङ्गात् । न च भासमानं यद्वैशिष्ट्यप्रतियोगित्वं तद्वत् ज्ञानत्वमेव तथा, दण्डपुरुषसंयोगप्रतियोगित्वानुयोगित्वानीति ज्ञाने दण्डविशिष्टज्ञानत्वापत्तेः । न च स्वरूपतो भासमानमित्युक्तावपि निस्तारः, प्रतियोगित्वादेरतिरिक्तत्वे प्रकारित्वादेर्ज्ञाननिष्ठस्य कल्पनाया एव लघुत्वात् । अनतिरेके तु दण्डदण्डत्वादिनिर्विकल्पकेऽपि दण्डादिविशिष्टज्ञानत्वापत्तेः ।

§१६७ एतेन स्वरूपतो भासमानेन वैशिष्ट्येन गर्भितलक्षणमप्यपास्तम्, संयुक्तसमवायादेः सम्बन्धत्वे स्वरूपत इत्यस्य दुर्वचत्वाच्च । तस्मात् पराभ्युपगतप्रकारिताविशेषवदाकारविशेषः साक्षात्कृतयाऽर्थानुरूपस्तदनुरूपो वा ज्ञाने दर्शनशब्दव्यपदेशहेतुरनाविलस्वसमय एवाऽर्थज्ञानयोरविनिगमेनाऽऽकाराकारिभावस्वभावाविर्भावादित्येव पुनरस्माकं मनीषोन्मेषः ।

समयान्तरोत्पादोक्तिः परतीर्थिकाभिप्राया–

§१६८ तस्माद्वास्तविक एक एव केवलज्ञानबोध इति फलितं सम्मतसूत्रसंवादयति–

"साई अपज्जवसियं ति दो वि ते ससमयं हवइ एवम् ।
परतित्थियवत्तव्वं च एगसमयंतरुप्पाओ ॥" [सम्मति० २।३१]

§१६९ साद्यपर्यवसितं केवलमिति द्वेऽपि ज्ञानदर्शने ते स्वसमयवक्तव्यं भवतीति यावत् । अयं च स्वसमयः स्वसिद्धान्तः । यस्त्वेकसमयान्तरोत्पादस्तयोर्मन्यते तत्परतीर्थिकवक्तव्यम्, नार्हद्वचनम्, नयाऽभिप्रायेण प्रवृत्तत्वादिति भावः ।

एवंरूपं दर्शनमपि सम्यग्ज्ञानमेव–

§१७० एवम्भूतवस्तुतत्त्वश्रद्धानरूपं सम्यग्दर्शनमपि सम्यग्ज्ञानविशेष एव । सम्यग्दर्शनत्वस्याऽपि सम्यग्ज्ञानत्वव्याप्यजातिविशेषरूपत्वात्, विषयताविशेषरूपत्वाद्वेत्याह–

१ मिति मु० । नाविं अ ब । २ न हि भास° अ ब । ३ °योगिनो ज्ञा° त । ४ °मेव निरूपित ज्ञान° अ ब । ५ °र्ण तविस्रनमत् ज्ञानत्वमेव त । ६ °ज्ञानापत्तेः अ । ७ °मानाँ दण्डा° अ ब । ८ °लघुत्व अ ब मु । ९ °त्वं ज्ञा° त ।

"एवं जिणपण्णत्ते सद्दहमाणस्स भावओ भावे ।
पुरिसस्साभिणिबोहे दंसणसद्दो हवइ जुत्तो ॥" [ सन्मति० २।३२ ]

§१७१ जिनप्रज्ञप्तभावविषयं समूहालम्बनं रुचिरूपं ज्ञानं मुख्यं सम्यग्दर्शनम्, तच्छासनोपनीतार्थविषयं घटादिज्ञानमपि भाक्तं तदिति तात्पर्यार्थः ।

सम्यग्दर्शनस्य विशिष्टज्ञानत्वम्–

§१७२ ननु सम्यग्ज्ञाने सम्यग्दर्शननियमवद्दर्शनेऽपि सम्यग्ज्ञाननियमः कथं न स्यात्? इत्यत्राह–

"सम्मन्नाणे णियमेण दंसणं, दंसणे उ भयणिज्जं ।
सम्मन्नाणं च इमं ति अत्थओ होइ उववन्नं ॥" [ सन्मति० २।३३ ]

§१७३ सम्यग्ज्ञाने नियमेन सम्यग्दर्शनम्, दर्शने पुनर्भजनीयं विकल्पनीयम् । सम्यग्ज्ञानं एकान्तरुचौ न सम्भवति, अनेकान्तरुचौ तु समस्तीति । अतः सम्यग्ज्ञाने चेदं सम्यग्दर्शनं चेत्यर्थतः सामर्थ्यादेवोपपन्नं भवति । तथा च सम्यक्त्वमपि दर्शनं ज्ञानविशेषरूपमेवेति निर्व्यूढम् ।

[ ग्रन्थकृत्प्रशस्तिः । ]

§१७४ प्राच्यां वाचां विभुरविषयोन्मेषसूक्ष्मेक्षिकायां,
येऽस्यानीमयमधिगता नव्यमार्गेऽनभिज्ञाः ।
तेषामेषा समयवणिजां सन्मतिग्रन्थगाथा,
विश्वासाय स्वनयविपणिप्राज्यवाणिज्यवीथी ॥ १ ॥
भेदग्राहिव्यवहृतिनयं संश्रितो मल्लवादी,
पूज्याः प्रायः करणफलयोः सीम्नि शुद्धर्जुसूत्रम् ।
भेदोच्छेदोन्मुखमधिगतः संग्रहं सिद्धसेन-
स्तस्मादेते न खलु विषमाः सूरिपक्षत्रयेऽपि ॥ २ ॥
चित्सामान्यं पुरुषपदभाक्केवलाख्ये विशेषे,
तद्रूपेण स्फुटमभिहितं साद्यनन्तं यदेव ।
सर्वैरंशैः क्रमयुगपदप्युच्यमानं न दुष्टं,
तत्सूरीणामियमभिमता मुख्यगौणव्यवस्था ॥ ३ ॥
तमोऽपगमचिज्जनुःक्षणभिदानिदानोद्भवाः,
श्रुता मधुकराः श्रुते नयविभागपक्षा यथा ।
तथा क इव विस्मयो भवतु सूरिपक्षत्रये,
प्रधानपदवी धियां क्व नु दवीयसी दृश्यते ॥ ४ ॥

---

१ °स्यादित्यत्र त । २ °र्शनं सम्यग्दर्शनं च च मु । ३ चेदर्थे सामर्थ्यादेवोपपन्नं मु ।

प्रसृमरसदसत्त्वयोर्न हि विरोधनिर्णायकं,
विशेषणविशेष्ययोरपि नियामकं यत्र न ।
गुणाऽगुणविभेदतो मतिरपेक्षया स्यात्पदात्
किमत्र भजनोर्जिते स्वसमये न संलक्ष्यते ॥ ५ ॥
प्रमाणनयसङ्गता स्वसमयेऽप्यनेकान्तधी-
र्नयस्वपरतन्त्रयोश्च सदुपाधिकिर्मीरिता ।
कदाचन न बाधते सुगुरुसम्प्रदायक्रमं,
समञ्जसपदं वदन्त्युरुधियो हि सद्दर्शनम् ॥ ६ ॥
रहस्यं जानन्ते किमपि न नयानां हतधियो
विरोधं भाषन्ते विविधबुधपक्षे बत खलाः ।
अमी चन्द्राऽऽदित्यप्रकृतिविकृतिव्यत्ययगिराः,
निरालम्बाः क्वाऽप्यहह न गुणान्वेषणपराः ॥ ७ ॥
स्याद्वादस्य ज्ञानबिन्दोरमन्दान्मन्दाराद्योः कः फलास्वादगर्वः ।
द्राक्षासाक्षात्कारपीयूषधाराधारादीनां को विलासश्च रम्यः ॥ ८ ॥
गच्छे श्रीविजयादिदेवसुगुरोः स्वच्छे गुणानां गणैः,
प्रौढिं प्रौढिमधाम्नि जीतविजयाः प्राज्ञा[2] परामैयरुः ।
तत्सातीर्थ्यभृतां नयादिविजयप्राज्ञोत्तमानां शिशु-
स्तत्त्वं किञ्चिदिदं यशोविजय इत्याख्याभृदाख्यातवान् ॥ ९ ॥

॥ इति उपाध्यायश्रीयशोविजयगणिना रचितं
ज्ञानबिन्दुप्रकरणम् ॥

---

१ °भेदये म° अ ब । २ °मैरा जितविजया° ब ।

अस्मादृशां प्रमादग्रस्तानां चरणकरणहीनानाम् ।
अब्धौ पोत इवेह प्रवचनराग शुभोपायः ॥

न्यायालोके श्रीयशोविजयः ।

स्वागमं रागमात्रेण द्वेषमात्रात् परागमम् ।
न श्रयामस्त्यजामो वा किन्तु मध्यस्थया दृशा ॥

ज्ञानसारे श्रीयशोविजयः ।

# ज्ञानबिन्दुप्रकरणस्य
# संपादककृतटिप्पणानि।

ज्ञानबिन्दुमधीयानानुपकर्तुमलं भवेत्।
तादृग्विचारसामग्री टिप्पणैरुपनीयते॥

पृ० १ पं० ५. 'स्वपरावभासकं' – प्र मी भा पृ ११। न्याया पृ १७६-१८९।

पृ० १ पं० ८ 'केवल' – तुलना–'उभयावरणातीतो केवलवरणाणदंसणसहावो' – विशेष गा १३४१।

पृ० १ पं० १० 'तं च स्वभावम्' – तुलना–"इह यद्यपि केवलज्ञानावरणीयं कर्म ज्ञानरूपं गुणं सर्वात्मना हन्तुं प्रवर्तते तथापि न तत् तेन समूलं हन्तुं शक्यते, तथास्वभावत्वात्" – इत्यादि – कर्म म पृ ११ A।

"इह केवलज्ञानावरणीयं कर्म ज्ञानलक्षणं गुणं सर्वात्मना हन्तुं प्रवर्तते तथापि न तेन स समूलघातं हन्तुं शक्यते तथास्वभावत्वात्। यथा अतिबहलेनापि जीमूतपटलेन दिनकररजनिकरकरनिकरतिरस्कारेऽपि सर्वथा प्रभा नाशयितुं शक्यते। अन्यथा प्रतिप्राणिप्रसिद्ध दिवसरजनीविभागाऽभावप्रसङ्गात्। उक्तं च –

"सुट्ठु वि मेघसमुदए, होइ पहा चन्दसूराणं।"

ततः केवलज्ञानावरणीयेनावृतेऽपि सर्वात्मना केवलज्ञाने यः कोऽपि तद्गतमन्दविशिष्ट-विशिष्टतरप्रभारूपो ज्ञानैकदेशो मतिज्ञानादिसंज्ञितः, तं यथायोगं मतिश्रुतावधिमनःपर्याय ज्ञानावरणानि घ्नन्ति, तदेतानि देशघातीनि।" पञ्चसं म स्व गा १८ पृ १२६।

पृ० १ पं० ११ 'सम्यगतीयाणां' – "इयमत्र भावना – निबिडनिबिडतरमेघपटलैराच्छादितयोरपि सूर्याचन्द्रमसोर्नैकान्तेन प्रभानाशः संपद्यते, सर्वस्य सर्वथा स्वभावापनयनस्य कर्तुमशक्यत्वात्। एवमनन्तानन्तैरपि ज्ञानदर्शनावरणकर्मपरमाणुभिरेकैकस्यात्मप्रदेशस्याऽऽवेष्टितपरिवेष्टितस्यापि नैकान्तेन चैतन्यमात्रस्याप्यभावो भवति ततो यत् सर्वजघन्यं तन्मतिश्रुतात्मकम् अत एव सिद्धोऽक्षरस्यानन्ततमो भागो नित्योद्घाटितः।" नन्दी म पृ १९२ A।

तुलना–"इयदि हु सव्वजहण्णं णिच्चुग्घाडं णिरावरणं।" – गोम जी गा ३१९

पृ० १ पं० १७ 'स्वाभावत्वात्' – "ननु कथमसंभवो यावता मत्यादीनि स्वस्वावरणक्षयोपशमेऽपि प्रादुष्यन्ति, ततो निर्मूलस्वावरणविलये तानि सुतरां भविष्यन्ति, चारित्रपरिणामवत्। उक्तं च –

"आवरणदेसविगमे जाइं वि जायंति मइसुयाईणि।
आवरणसव्वविगमे कह ताइं न होंति जीवस्स॥"

अथ स्वभावत एवाभिनिबोधिकादिको ज्ञानस्य भेदो, न च स्वभावः पर्यनुयोगमर्हति । न खलु किं दहनो दहति नाकाशमिति कोऽपि पर्यनुयोगमाचरति । अहो ! महती महीयसो भवतः शेमुषी । ननु यदि स्वभावत एव आभिनिबोधिकादिको ज्ञानस्य भेदः, तर्हि भगवतः सर्वज्ञत्वहानिप्रसङ्गः । तथाहि – ज्ञानमात्मनो धर्मः । तस्य चाभिनिबोधिकादिको भेदः स्वभावत एव व्यवस्थितः क्षीणावरणस्यापि तद्भावप्रसङ्गः । सति च तद्भावे अस्मादृशस्येव भगवतोऽपि असर्वज्ञत्वमापद्यते । केवलज्ञानभावतः समस्तवस्तुपरिच्छेदान्नासर्वज्ञत्वमिति चेत् । ननु यदा केवलोपयोगसंभवस्तदा तस्य भवतु भगवतः सर्वज्ञत्वं यदा तु आभिनिबोधिकादिज्ञानोपयोगसंभवः तदा देशतः परिच्छेदसंभवात् अस्मादृशस्येव तस्यापि प्रकारेणासर्वज्ञत्वमापद्यते । न च वाच्यम् – तस्य तदुपयोग एव न भविष्यति, आत्मस्वभावत्वेन तस्यापि क्रमेणोपयोगस्य निवारयितुमशक्यत्वात्, केवलज्ञानान्तरं केवलदर्शनोपयोगवत् । ततः केवलज्ञानकाले सर्वज्ञत्वं शेषज्ञानोपयोगकाले चासर्वज्ञत्वमापद्यते । तच्च विरुद्धमतोऽनिष्टमिति । आह च –

"नयणगसहावत्ते आभिणिबोहाइ किंकओ भेदो ।
नेयविसेसाओ चे न सव्वविसयं जओ चरिमं ॥
अह पडिवत्तिविसेसा नेगंमि अणेगभेयभावाओ ।
आवरणनिमित्ताओ वि हु सभावभेयं विणा न भवे ॥
तम्मि य सइ सव्वेसिं खीणावरणस्स पावई भावो ।
तब्भावाउ विय फुडविरोहो स चाणिट्ठो ॥
अरहा वि असव्वन्नू आभिणिबोहाइभावओ नियमा ।
केवलभावाओ चे सव्वण्णू ननु विरुद्धमिणं ॥"

तस्मात् इदमेव युक्तियुक्तं पश्यामो यदुतावग्रहज्ञानादारभ्य यावदुत्कर्षप्राप्तं परमावधिज्ञानं तावत् सकलमप्येकम्, तच्चासकलसंज्ञितम्, अशेषवस्तुविषयत्वाभावात् । अपरं च केवलिनः । तच्च सकलसंज्ञितमिति द्वावेव भेदौ । उक्तं च –

"तम्हा अवग्गहाओ आरब्भ इहेगमेव नाणं ति ।
जुत्तं छउमत्थस्सासकलं इयरं च केवलिणो ॥"

अत्र प्रतिविधीयते । तत्र यत्तावदुक्तम् – 'सकलमपीदं ज्ञानं ज्ञस्वैकस्वभावस्याविशेषे किंकृत एष आभिनिबोधिकादिको भेद' इति तत्र ज्ञस्वैकस्वभावता किं सामान्यतो भवता अभ्युपगम्यते विशेषतो वा ? । तत्र न तावदाद्यः पक्षः सिद्धसाध्यतया तस्य बाधकत्वायोगात् । बोधस्वरूपसामान्यापेक्षया हि सकलमपि ज्ञानमस्माभिरेकमभ्युपगम्यत एव । ततः का नो हानिरिति । अथ द्वितीयपक्षः । तदयुक्तम् । असिद्धत्वात् । न हि नाम विशेषतो विज्ञानमेकमेवोपलभ्यते प्रतिप्राणि स्वसंवेदनप्रत्यक्षेणोत्कर्षापकर्षदर्शनात्, अथ यदुत्कर्षापकर्षमात्रभेददर्शनात् ज्ञानभेदः तर्हि तावुत्कर्षापकर्षौ प्रतिप्राणि देशकालाद्यपेक्षया असंख्येयशो भिद्येते । ततः कथं पञ्चरूपता ? । नैष दोषः । परिस्थूरनिमित्तभेदतः पञ्चप्रकारत्वस्य प्रतिपादनात् । तथाहि –

सकलघातिक्षयो निमित्तं केवलज्ञानस्य । मनःपर्यायज्ञानस्य तु आमर्षौषध्यादिलब्ध्युपेतस्य प्रमादलेशेनाप्यकलङ्कितस्य विशिष्टो विशिष्टाध्यवसायानुगतोऽप्रमादः 'तं संजयस्स सव्वपमायरहियस्स विविहरिद्धिमतो' इति वचनप्रामाण्यात् । अवधिज्ञानस्य पुनः तथाविधा-निमित्तमिन्द्रियाद्यसाक्षादवगमनिबन्धनक्षयोपशमविशेषः । मतिश्रुतज्ञानयोस्तु लक्षणभेदादिकं तथाग्रे वक्ष्यते । उक्तं च –

"नेगमसहावयं ओहेण विसेसओ पुण असिद्धं ।
एगंतस्सहावत्तणओ कह हाणिवुड्ढीओ ॥
जं अविसुद्धिसहावे तत्थे एगंततस्सहावत्तं ।
न य तं खओवसमओ उक्करिसावगरिसविसेसा ॥
तम्हा परिपूराओ निमित्तभेयाओ समयसिद्धाओ ।
उववत्तिसंगओ चिय आभिणिबोहाइओ भेओ ॥
घाइक्खओ निमित्तं केवलनाणस्स वन्निओ समए ।
मणपज्जवनाणस्स उ तहाविहो अप्पमाओ त्ति ॥
ओहिन्नाणस्स तहा अणिंदिएसु पि जो खओवसमो ।
मइसुयनाणाणं पुण लक्खणभेयादिओ भेओ ॥"

यदप्युक्तम् – 'ज्ञेयभेदाद्भेदमिच्छामि' तदप्यनभ्युपगमतिरस्कृतत्वात् दूरापास्तप्रसरम् । न हि वयं ज्ञेयभेदमात्रतो ज्ञानस्य भेदमिच्छामः । एकेनाप्यवग्रहादिना बहुबहुविधवस्तुग्रहणो-पलम्भात् ।

यदपि च प्रत्यपादि – 'प्रतिपत्तिप्रकारभेदकृत' इत्यादि तदपि न नो बाधामाधातुमलम् । यतस्ते प्रतिपत्तिप्रकाराः देशकालादिभेदेनानन्त्यमपि प्रतिपद्यमाना न परिपूर्णनिमित्तभेदेन व्यवस्थापितानाभिनिबोधिकादीन् जातिभेदानतिक्रामन्ति । ततः कथमेकस्मिन् अनेकभेदभाव-प्रसङ्गः ? । उक्तं च –

"न य पडिवत्तिविसेसा एगंमि य णेगभेयभावे वि ।
जं ते तहा विसिट्ठे न जाइभेए विलंघेइ ॥"

यदप्यवादीद् – 'आवार्यापेक्षं हि आवारकम्' इत्यादि तदपि न नो मनोबाधायै । यतः परिपूर्णनिमित्तभेदसमधिगतस्य व्यवस्थापितो ज्ञानस्य भेदः तदपेक्षमावारकमपि तथा भिद्यमानं न युक्त्याऽऽश्रुतेन च बाधनीयतामारचयति । एतदुक्तेविधो भूयः स्वाग्रहं परः प्रकटयति – ननु परिपूर्णनिमित्तभेदव्यवस्थापिता अप्यमी आभिनिबोधिकादयो भेदा ज्ञानस्य स्वभूता उताज्ञानात्मभूताः ? । किञ्चातः ? । उभयथापि दोषः । तथाहि – यद्यात्मभूतास्ततः क्षीणा-वरणेऽपि तद्भावप्रसङ्गः । यथा च असर्वज्ञत्वं मतिश्रुतज्ञानिनः प्रसज्यते । अथानात्मभूताः, तर्हि न ते पारमार्थिकाः, कथमावार्यापेक्षो वास्तवः आवारकभेदः ? । तदपि न मनोरमम् । सम्यग्वस्तुस्वरूपापरिज्ञानात् । इह हि सकलघनपटलविनिर्मुक्तशारददिनमणिरिव समन्ततः समस्तवस्तुस्तोमप्रकाशनैकस्वभावो जीवः । तस्य च तथाभूतः स्वभावः केवलज्ञानमिति व्यपदिश्यते । स च यद्यपि सर्वघातिना केवलज्ञानावरणेन आव्रियते तथापि तस्यानन्ततमो भागो नित्योद्घाटित एव "अक्खरस्स अणंतो भागो निच्चुग्घाडिओ । जइ पुण सो वि

बिम्बमात्राश्रितस्य विना व्यापारान्तरमप्रत्यनिवर्तकत्वापातात्, तत्कल्पितस्य तदाश्रितत्वेन तदाश्रय त्वायोगात्। तथाविद्यायामनुपपत्तिरलङ्कारः, अनुपपत्तिमात्रं नालङ्कारः, किन्तु सत्यादि प्रापकमुक्तावनुपपत्तिः, अन्यथा वादिवचसोऽनवकाशापत्तेः।" अद्वैत पृ० ५७७।

"वाचस्पतिमिश्रैस्तु जीवाश्रितैवाऽविद्या निगद्यते। ननु—जीवाश्रिताविद्या तत्प्रतिबिम्बित चैतन्यं वा तदवच्छिन्नचैतन्यं वा, तत्कल्पितमेवं वा जीवः, तथा चान्योन्याश्रय इति चेन्न, किमयमन्योन्याश्रय उत्पत्तौ ज्ञप्तौ स्थितौ वा। नाद्यः, अनादित्वादुभयोः। न द्वितीयः, अज्ञानस्य चिदाश्रयत्वेऽपि चितेः स्वप्रकाशत्वेन तद्भास्यत्वात्। न तृतीयः, स किं परस्पराश्रितत्वेन वा परस्परसापेक्षस्थितिकत्वेन वा स्यात्। नाद्यः, उभयस्याप्यसिद्धेः अज्ञानस्य चिदाश्रयत्वे चिदधीन-स्थितिकत्वेऽपि चितेः अविद्याश्रितत्वतदधीनस्थितिकत्वयोरभावात्। न चैवमन्योन्याधीनता-क्षतिः। समानकालीनयोरपि अवच्छेद्यावच्छेदकभावमात्रेण तदुपपत्तेः घटतदवच्छिन्नाकाश-योरिव प्रमाणप्रमेययोरिव च। तदुक्तम्—

"स्वेनैव कल्पिते देशे व्योम्नि यद्वद्घटादिकम्।
तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः॥" इति।

एतेन चतुःसिद्धान्तमात्रमविद्याभ्युपगमेनाऽन्योन्यापेक्षतया अदोषत्वं यथा चैत्रमैत्रादेर् न्योन्यारोहणाद्यापत्तिरिति निरस्तम्, परस्पराश्रयाश्रयिभावस्यानङ्गीकारात्। न चेश्वरजीव-योरीश्वरजीवकल्पितत्वे आत्माश्रयः जीवेशकल्पितत्वे चान्योन्याश्रयः, न च शुद्धा चित् कल्पिका तस्या अज्ञानाभावादिति वाच्यम्; जीवाश्रिताया अविद्याया एव जीवेशकल्पकत्वे नैतद्दोषस्यावकाशात्, तथा जीवाश्रयत्वेऽप्यदोषः।" अद्वै पृ० ५८५।

सर्वज्ञात्ममुनिसमर्थितोऽज्ञानस्य आत्माश्रयत्वपक्षः तदीयगुरुसुरेश्वराचार्यप्रणीतायां नैष्कर्म्यसिद्धौ स्फुटं दृश्यते—

'ऐकात्म्याप्रतिपत्तिर्या स्वात्मानुभवसंश्रया।
साऽविद्या संसृतेर्बीजं तन्नाशो मुक्तिरात्मनः'॥" नैष्क० १।७।

"एकोऽद्वितीयः आत्मा एकात्मा तस्य भावः ऐकात्म्यं तद्विषयाऽप्रतिपत्तिरैकात्म्याप्रतिपत्तिरविद्याविषयो दर्शितः सांप्रतमाश्रयोऽपि स एवेत्याह—स्वात्मेति। स्वश्चासौ आत्मा चेति स्वात्मा। स्वशब्देन आरोपितात्मभावान् अहंकारादीन् व्यावर्तयति। स्वात्मा चासौ अनुभवश्चेति स्वात्मानुभवः स एव आश्रयो यस्याः सा तथोक्ता।" नैष्क० टी० १।७

"तथाज्ञानं स्वात्ममात्रनिमित्तं न संभवतीति कस्यचित् कस्मिंश्चिद्विषये भवतीत्यभ्युपगन्तव्यम्। इह च पदार्थद्वयं निर्धारितम्—आत्मा अनात्मा च। तत्रानात्मनस्तावत् नाज्ञानेनाभिसंबन्धः। तस्य हि स्वरूपमेवाऽज्ञानं। न हि अज्ञानस्याऽज्ञानं घटते। संभवदपि स्वाज्ञानस्वभावेऽज्ञानं कमतिशयं जनयेत्। न च तत्र ज्ञानप्राप्तिरस्ति येन तत्प्रतिषेधात्मकम् ज्ञानं स्यात्। अनात्मनश्चाज्ञानप्रसूतत्वात्। न हि पूर्वसिद्धं सत् ततो लब्धात्मलाभस्य सेत्स्यत आश्रयत्वाय संभवति। तदनपेक्षस्य च तस्य निःस्वाभाव्यात्। एतेभ्य एव हेतुभ्यो नाऽनात्मविषयमज्ञानं संभवतीति ग्राह्यम्। एवं चापद्याऽनात्मनोऽज्ञानित्वं नापि तद्विषयमज्ञानम्। पारिशेष्यादात्मन एवास्त्वज्ञानं तस्याज्ञोऽस्मीत्यनुभवदर्शनात्। "सोऽहं

भगवो मन्त्रविदेवास्मि नात्मवित्" इति श्रुतेः । न चात्मनोऽज्ञानस्वरूपता तस्य चैतन्यमात्र-स्वभावत्वात्तमस्य संभवति ज्ञानविपरिलोपो ज्ञानप्राप्तेश्च संभवतस्तस्य ज्ञानकारित्वात् । न चाज्ञानकार्यत्वं कूटस्थात्मसामान्यात्, अज्ञानापेक्षस्य चात्मनः स्वत एव स्वरूपसिद्धेर्युक्त मात्मन एवाज्ञत्वम् । किं विषय पुनस्तदात्मनोऽज्ञानम् । आत्मविषयमिति ब्रूमः । नन्वात्मनोऽपि ज्ञानस्वरूपत्वादनन्यत्वाच्च ज्ञानप्रकृतित्वादित्यमेव हेतुभ्यो नैवाज्ञानं घटते । घटत एव । कथम् । अज्ञानमात्रनिमित्तत्वात् तद्विभागस्य स्वप्नवत् रज्ज्वाः । तस्मात् तदपनुत्तौ द्वैतप्रतीभावः । तदपनोदश्च वाक्यार्थेन तत्त्वमस्याद्यर्थाभिज्ञस्य ।' नैष्क० ३.१ ।

पृ० २ पं० २४ 'तत्रैव प्रपञ्चोत्पत्ति'—जगदुपादानत्वविषये मतद्वयं वाचस्पतिमिश्राभ्युपगतत्वेन व्यवस्थैवमात्रं भिन्नभिन्नग्रन्थेषु दृश्यते—सिद्धान्तबिन्दौ जीवस्य प्रपञ्चोपादानत्वं वाचस्पतिमिश्रमतत्वेन व्यावर्णितम् । सिद्धान्तलेशे तु ईश्वरस्य प्रपञ्चोपादानत्वं वाचस्पतिमिश्रमतत्वेन निरूपितम् ।

अज्ञानस्य जीवाश्रयत्वविषयं वाचस्पतिमिश्राभ्युपगमं निरस्यता ग्रन्थकारेण अन्यमासार्थो क्रोडे वाचस्पतिमिश्रपक्षे जीवे प्रपञ्चोत्पत्तिप्रसञ्जनरूपं दूषणं दत्तम् । इदं च ग्रन्थकारदत्तं दूषणं वाचस्पतिमिश्राभ्युपगतत्वेन सिद्धान्तलेशवर्णितं प्रपञ्चस्य ईश्वरोपादानत्वपक्षमवलम्ब्यैव संगच्छते । न तु सिद्धान्तबिन्दुवर्णितं प्रपञ्चस्य जीवोपादानत्वपक्षमवलम्ब्य । सिद्धान्तबिन्दुवर्णितपक्षाश्रयेण हि वाचस्पतिमतावलम्बिनां जीवे प्रपञ्चोत्पत्तेरिष्टत्वेनानिष्टापादनरूपस्य ग्रन्थकारदत्तप्रसङ्गस्य अवकाशाभावात् ।

सिद्धान्तबिन्दुसिद्धान्तलेशयोः प्रस्तुतोपयोगिनौ पाठौ त्वम्—

"अज्ञानविषयीकृतं चैतन्यमीश्वरः । अज्ञानाश्रयीभूतं च जीव इति वाचस्पतिमिश्राः । अस्मिंश्च पक्षे अज्ञाननानात्वात् जीवनानात्वम् । प्रतिजीवं च प्रपञ्चभेदः । जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वात् । प्रत्यभिज्ञा चाति सादृश्यात् । ईश्वरस्य च सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचारादिति । अयमेव चावच्छेदवादः ।" सिद्धान्त० ११७–२११।

"वाचस्पतिमिश्रास्तु—जीवाश्रितमायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्तमानतयोपादानमिति मायासहकारिमात्रम् न कार्यानुगतं द्वारकारणमित्याहुः ।" सिद्धान्तलेश १ १६ पृ० ७७।

"तस्मात्सिद्धं जीवाश्रितमायाविषयीकृतं ब्रह्म प्रपञ्चाकारेण विवर्तमानतया उपादानमिति । तदुक्तं आरम्भणाधिकरणभाष्ये—मूलकारणमेव आ अन्त्यात् कार्यात् तेन तेन कार्याकारेण नटवत् सर्वव्यवहारास्पदत्वं प्रतिपद्यते इति ।

आ अन्त्यात् कार्यादिति अन्त्यकार्यपर्यन्तमित्यर्थः । नटो हि सुमित्राद्यभिनेतव्यरूप एव तत्तदभिनेयपात्रस्वरूपतां प्रतिपद्यते, एवं जीवैरविज्ञाततत्त्वं सद् ब्रह्म आकाशादिप्रपञ्चाकारतां तद्द्वारा व्यवहारविषयतां च प्रतिपद्यते इति भाष्यार्थः । अत्र भट्टाचार्योक्त्या वाचस्पतिमतं भाष्याभिमतं निर्णीयते । तदुक्तं कल्पतरौ—

"अज्ञानन्वद् आप कारणं शंकरोऽब्रवीत् ।
जीवाज्ञानं जगद्बीजं जगौ वाचस्पतिस्तथा ॥" इति ।"

सिद्धान्तलेशसंग्रह १२६ पृ ७८ । पाठभेद प सू ८ ।

१ प० १० 'महाभाष्यकार'–

"सेसभावावगमे सुद्धयरं केवलं जहा नाणं"–विशेषा भा ११११ ।

"नाणं केवलवज्जं साई संतो खओवसमो"–विशेषा भा १ ७ ।

"सव्वावरणावगमे सो सुद्धयरो भवेज्ज सूरो व्व ।
तम्मयभावाभावादण्णाणियं न सुत्तं से ॥
एवं पगासमइओ जीवो छिद्दावभासयत्ताओ ।
किंचिम्मेत्तं भासइ छिद्दावरणपईवो व्व ॥
सुबहुयरं वियाणइ मुत्तो सव्वप्पिहाणविगमाओ ।
अवणीयघरो व्व नरो विगयावरणप्पईवो व्व ॥"

विशेषा भा १३३१-२ ११

१ प० १० 'अत एव द्वितीया'–

"द्वितीयापूर्वकरणे प्रथमस्तात्त्विको भवेत् ।" योगद १ ।

प्रथमः धर्मसन्याससंज्ञितः सामर्थ्ययोगः तात्त्विकः पारमार्थिको भवेत् क्षपकश्रेणि
क्षायोपशमिकक्षान्त्यादिधर्मनिवृत्तेः "–योगद टी १ । यशो द्वा १८
।

१ पं० १२ 'मुक्तावनवस्थानम्'–"सिद्धाणं पुच्छा । गोयमा ! सिद्धा नो
नो असंजया, नो संजयासंजया, नोसंजय-नोअसंजय-नोसंजयासंजया ।" प्रज्ञापना ३

पशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्व-ज्ञान-दर्शन-सिद्धत्वेभ्यः ।" तत्त्व

पुरस्कृतभावप्रज्ञापनीयस्य नोचारित्री नोअचारित्री सिध्यतीति ।" तत्त्व भा १ ७।

रित्रेण केन सिध्यति ? । अव्यपदेशेन चतुःपञ्चविकल्पचारित्रेण वा सिद्धिः ।" ॥
१।

पुरस्कृत ते हि भयवशात् न चारित्रेण व्यपदेशविरहितेन भावेन सिद्धिः ।" राजवा
।

"सम्मत्तचरित्ताइं साई संतो य ओवसमिओऽयं ।
दाणाइलद्धिपणगं चरणं पि य खाइओ भावो ॥" विशेषा भा १ ७८ ।

केवलमौपशमिकतया (सादिसपर्यवसितरूपः) क्षायिकोऽपि भावः क्षीणमोह-भव
त्वमायो दानलाभभोगोपभोगवीर्यलब्धिपञ्चकं चारित्रं चाश्रित्य सादिसपर्यवसित

किमिति न भवति ? इति चेत् । तदयुक्तम् । 'सिद्धे नो चरित्ती नो अचरित्ती' इति वचनात् । क्षायिकसम्यक्त्व-केवलज्ञान-केवलदर्शन-सिद्धत्वानि पुनः सिद्धावस्थायामपि भवन्ति, अतः तदाश्रित क्षायिको भावः साद्यपर्यवसान इति । अन्ये तु दानादिलब्धिपञ्चकं चारित्रं च सिद्धस्याऽपीच्छन्ति तदावरणस्य तत्राप्यभावात् । आवरणाभावेऽपि च तदसत्त्वे क्षीणमोहादिष्वपि तदसत्त्वप्रसंगात् । तदसम्भवेन चारित्रादीनां सिद्धावस्थायामपि सद्भावेन अपर्यवसितत्वात् एकस्मिन् द्वितीयभङ्ग एव क्षायिको भावो न शेषेषु त्रिष्विति ।" विशेष० टी० गा० २ ७८ । [illegible] १८ ।

पृ० १ पं० १८ 'क्षयोपशम' — "उभयात्मको मिश्रः । यथा तस्मिन्नेवाम्भसि कतकद्रव्यसंबन्धात् पङ्कस्य क्षीणाक्षीणवृत्तिः" — सर्वार्थ० २.१ ।

"सर्वघातिस्पर्धकानामुदयक्षयात् तेषामेव सदुपशमात् देशघातिस्पर्धकानामुदये क्षायोपशमिको भावो भवति" — सर्वार्थ० २.५ ।

"उभयात्मको मिश्रः क्षीणाक्षीणमदशक्तिकोद्रववत् ॥ ३ ॥ यथा प्रक्षालनविशेषात् क्षीणाक्षीणमदशक्तिकस्य कोद्रवद्रव्यस्य द्विधा वृत्तिः तथा यथोक्तक्षयहेतुसन्निधाने सति कर्मण एकदेशस्य क्षयात् एकदेशस्य च वीर्योपशमादात्मनो भाव उभयात्मको मिश्र इति व्यपदिश्यते ॥" राजवा० २.१ ।

"सर्वघातिस्पर्धकानामुदयक्षयात् तेषामेव सदुपशमाद्देशघातिस्पर्धकानामुदये क्षायोपशमिको भावः ॥ ३ ॥ द्विविधं स्पर्धकम् — देशघातिस्पर्धकं सर्वघातिस्पर्धकं चेति । तत्र यदा सर्वघातिस्पर्धकस्योदयो भवति तदेषदपि आत्मगुणस्याभिव्यक्तिर्नास्ति तस्मात्तदुदयस्याभावः क्षय इत्युच्यते । तस्यैव सर्वघातिस्पर्धकस्यानुदयप्राप्तस्य सदवस्था उपशम इत्युच्यते । अनुद्भूतस्ववीर्यवृत्तित्वात् आत्मसात्कृतसर्वघातिस्पर्धकस्योदयक्षये देशघातिस्पर्धकस्य चोदये सति सर्वघात्यभावादुपलभ्यमानो भावः क्षायोपशमिक इत्युच्यते ॥" राजवा० २.५ । पञ्च० ४ ४ ११३-१४६ । कर्म० प० ४१४ ।

पृ० १ पं० १९ 'रसस्पर्धकानि' — "अविभागपरिच्छिन्नकर्मप्रदेशरसभागप्रचयपङ्क्तेः क्रमवृद्धिः क्रमहानिः स्पर्धकम् ॥ ३ ॥ एकैकस्य कर्मणः प्रदेशा अभव्यानामनन्तगुणाः सिद्धानामनन्तभागप्रमाणाः । तत्र सर्वजघन्यगुणः प्रदेशः परिगृहीतः तस्यानुभागः प्रज्ञाछेदेन तावद्धा परिच्छिन्नः यावत्पुनर्विभागो न भवति ते अविभागपरिच्छेदाः सर्वजीवानामनन्तगुणाः एको राशिः कृतः [वर्गः] । एवं तत्प्रमाणाः सर्वे तथैव परिच्छिन्नाः पङ्क्तीकृता वर्गा वर्गणा । अपर एकाविभागपरिच्छेदाधिकः प्रदेशः परिगृहीतस्तथैव तस्याविभागपरिच्छेदाः कृताः स एको राशिर्वर्गः । तथैव समगुणाः पङ्क्तीकृता वर्गा वर्गणा । एवं पङ्क्तयः कृताः यावदेकाविभागपरिच्छेदाधिकलाभम् । तदलाभेऽन्तरं भवत्येवमेतासां पङ्क्तीनां विशेषहीनानां क्रमवृद्धिक्रमहानियुक्तानां समुदयः स्पर्धकमित्युच्यते । तत उपरि द्विचतुरादिसंख्येयासंख्येयगुणरसा न लभ्यन्ते अनन्तगुणरसा एव । तत्रैकप्रदेशो जघन्यगुणः परिगृहीतः तस्य चानुभागाविभागपरिच्छेदाः पूर्ववत् कृताः । एवं समगुणा वर्गाः समुदिता वर्गणा भवति । एकाविभागपरिच्छेदाधिकाः पूर्ववद्विरलीकृता वर्गा वर्गणाश्च भवन्ति यावदन्तरं भवति तावदेकं स्पर्धकं भवति । एवमनेन क्रमेण विभागे क्रियमाणे अभव्यानामनन्तगुणानि सिद्धा-

भागमनन्तभागप्रमाणानि स्पर्धकानि भवन्ति । सर्वेतत्समुदितमेकमनुभागस्थानं भवति ।" रामा ९.५।

"इह कर्मप्रायोग्यवर्गणान्तःपातिनः सन्तः कर्मपरमाणवो न तथाविधविशिष्टरसोपेता आसीरन् किन्तु प्रायो नीरसा एकस्वरूपाश्च । यदा तु जीवेन गृह्यन्ते तदानीं ग्रहणसमय एव तेषां काषायिकेणाध्यवसायेन सर्वजीवेभ्योऽपि अनन्तगुणा रसाविभागा आपद्यन्ते, ज्ञानावरकत्वादिविविधस्वभावता च अचिन्त्यत्वात् जीवानां पुद्गलानां च शक्तेः । न चैतदनुपपन्नम्, तथादर्शनात् । तथाहि—शुष्कतृणादिपरमाणवोऽत्यन्तनीरसा अपि गवादिभिर्गृहीत्वा विशिष्टक्षीरादिरसरूपतया च परिणम्यन्ते इति ।" कर्मप्र० बन्धन० मलय० गा० २९।

"अभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा अनन्ता वर्गणा एकं स्पर्धकम् । एकेन रसाविभागेनाभ्यधिकाः परमाणवो न प्राप्यन्ते । नापि द्वाभ्याम् । नापि त्रिभिः । नापि संख्येयैः । नाप्यसंख्येयैः । नाप्यनन्तैः । किन्तु अनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैरभ्यधिकाः प्राप्यन्ते । ततः तेषां समुदायो द्वितीयस्य स्पर्धकस्य प्रथमा वर्गणा । तत एकेन रसाविभागेनाधिकानां परमाणूनां समुदायो द्वितीया वर्गणा । द्वाभ्यां रसाविभागाभ्यामधिकानां परमाणूनां समुदायस्तृतीया वर्गणा । एवमेकैकरसाविभागवृद्ध्या वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति । ततः तासां समुदायो द्वितीयं स्पर्धकम् । ततः पुनरप्यतः ऊर्ध्वमेकेन रसाविभागेनाभ्यधिकाः परमाणवो न प्राप्यन्ते । नापि द्वाभ्याम् । नापि त्रिभिः । नापि संख्येयैः । नाप्यसंख्येयैः । नाप्यनन्तैः । किन्तु अनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैः । ततः तेषां समुदायस्तृतीयस्य स्पर्धकस्य प्रथमा वर्गणा । ततः पुनरप्यत ऊर्ध्वं यथोत्तरमेकैकरसाविभागवृद्ध्या द्वितीयादिका वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति । ततस्तासां समुदायस्तृतीयं स्पर्धकम् । एवं स्पर्धकानि तावद्वाच्यानि यावदभव्येभ्योऽनन्तगुणानि सिद्धानामनन्तभागकल्पानि भवन्ति । तेषां समुदाय एकमनुभागबन्धस्थानम् । अनुभागबन्धस्थानं नामैकेन काषायिकेणाध्यवसायेन गृहीतानां कर्मपरमाणूनां रसस्पर्धकसमुदायपरिमाणम् ।" कर्मप्र० बन्धन० मलय० गा० ३१।

पृ० २ पं० १९ 'तत्र केवल'—पंच० प्र० गा० २९ टी० १११।

पृ० १ पं० २० 'विद्यते'—पंच० प्र० गा० १७ टी० ११५।

पृ० १ पं० २० 'सर्वघातिनीनाम्'—"याः सर्वथा सर्वघातिरसस्पर्धकान्विताः ताः सर्वघातिन्यः । यास्तु देशघातिरसस्पर्धकान्वितास्ता देशघातिन्यः । प्रकारान्तरेण सर्वघातित्वं देशघातित्वं च प्रतिपादयति । स्वविषयो ज्ञानादिलक्षणो गुणः, तस्य यद् घातनं तस्य यो भेदो देशकात्स्न्यविषयः, तेन घातित्वं—सर्वघातित्वं देशघातित्वं च ज्ञेयम् । सर्वस्वविषयघातिन्यः सर्वघातिन्यः । स्वविषयैकदेशघातिन्यो देशघातिन्यः ।" पञ्च० प्र० ब० गा० १९ टी० १४ कर्मप्र० यशो० पृ० ३१।

पृ० १ पं० २१ 'सर्वघातीन्येव'—"यः स्वविषयं ज्ञानादिकं सकलमपि घातयति तत्कार्यसाधनं प्रति असमर्थं करोति स रसः सर्वघाती भवति । स च ताम्रभाजनवन्निश्छिद्रो घृतमिवातिशयेन स्निग्धः, द्राक्षावत्तनुकः—बहुलप्रदेशोपचितः, स्फटिकाभ्रहारवदतीव

निर्मलः । इह रसः केवलो न भवति ततो रससर्धकसंघात एवरूपो द्रष्टव्यः ।" पञ्च० म० प्र० प० ४ पृ० १४ कर्मप्र० मलो० पृ० ३२।

पृ० १ पं० २१ 'उपदर्शेनाथाम्'–पञ्च० प्र० प० १८ पृ० ११५।

पृ० १ पं० २१ 'देशघातीनि'–"इतरो देशघाती देशघातित्वात् स्वविषयैकदेशघाति-त्वाद् भवति । स च विविधबहुच्छिद्रभृतः, तद्यथा–कश्चिद्वंशदलनिर्मापितकट इवातिस्थूरच्छिद्रशतसंकुलः, कश्चित्कम्बल इव मध्यमविवरशतसंकुलः, कोऽपि पुनस्तथाविधमसृणवासोवदतीवसूक्ष्मविवरसंभृतः । तथा स्वरूपतोऽल्पस्नेहः स्तोकस्तदविभागसमुदायरूपः। अविमलश्च नैर्मल्यरहितश्च ।" पञ्च० म० प्र० प० ४१ पृ० १४१।

पृ० १ पं० २२ 'चतुःस्थानक'–"इह शुभप्रकृतीनां रसः क्षीरखण्डादिरसोपमः, अशुभप्रकृतीनां तु निम्बघोषातक्यादिरसोपमः । वक्ष्यते च–"घोसाडइनिंबुवमो असुभाण सुभाण खीरखंडुवमो" । क्षीरादिरसश्च स्वाभाविक एकस्थानक उच्यते द्वयोस्तु कर्षयोरावर्तने कृते सति योऽवशिष्यते एकः कर्षः स द्विस्थानकः, त्रयाणां कर्षाणामावर्तने कृते सति च एकः कर्षोऽवशिष्टः स त्रिस्थानकः, चतुर्णां कर्षाणामावर्तने कृते समुद्धरितो य एकः कर्षः स चतुःस्थानकः । एकस्थानकोऽपि च रसो जललवबिन्दुचुलुकप्रसृतिअञ्जलि-करकुम्भद्रोणादिप्रक्षेपान्मन्दमन्दतरादिभेदत्वं प्रतिपद्यते, एवं द्विस्थानकादयोऽपि । तथा कर्मणामपि चतुःस्थानकादयो रसा भावनीयाः, प्रत्येकमनन्तभेदभिन्नाश्च । कर्मणां चैकस्थानकरसाद् द्विस्थानकादयो रसा यथोत्तरमनन्तगुणाः ।" पञ्च० म० प्र० गा० २९ पृ० १११।

पृ० १ पं० २४ 'तत्र ज्ञानावरण'– 'संप्रति यासां प्रकृतीनां यावन्ति बन्धमधिकृत्य रसस्पर्धकानि संभवन्ति तासां तावन्ति निर्दिदिक्षुराह–आवरण ज्ञानावरणं दर्शनावरणं च तत् कथम्भूतमित्याह–असर्वघ्नम् सर्वं ज्ञानं दर्शनं वा हन्तीति सर्वघ्नं सर्वघाति, तदेव सर्वघ्नात् केवलज्ञानावरणं केवलदर्शनावरणं च, न विद्यते सर्वघ्नं यत्र तदसर्वघ्नं केवलज्ञानावरणकेवलदर्शनावरणरहितमित्यर्थः । एतदुक्तं भवति–केवलज्ञानावरणवर्जानि शेषाणि मति-श्रुतावधिमनःपर्यायज्ञानावरणलक्षणानि चत्वारि ज्ञानावरणानि केवलदर्शनावरणवर्जानि शेषाणि चक्षुरचक्षुरवधिदर्शनावरणलक्षणानि त्रीणि दर्शनावरणानि, तथा 'पुंसंजलणंतराय'त्ति–पुरुषवेदः चत्वारः संज्वलनाः क्रोधादयः पञ्चविधमन्तरायं दानान्तरायादि, एवंसंख्या सप्तदशप्रकृतयश्चतुःस्थानपरिणताः एकद्वित्रिचतुःस्थानकरसपरिणताः प्राप्यन्ते बन्धमधिकृत्यासामेकस्थानको द्विस्थानकस्त्रिस्थानकश्चतुःस्थानको वा रसः प्राप्यते इति भावः । तत्र यावन्नाद्यापि श्रेणिं प्रतिपद्यन्ते जन्तवस्तावदासां सप्तदशानामपि प्रकृतीनां यथाध्यवसाय-सम्भवं द्विस्थानकं त्रिस्थानकं चतुःस्थानकं वा रसं बध्नन्ति श्रेणिं तु प्रतिपन्ना अनिवृत्तिबादर-सम्परायाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु ततः प्रभृत्येवासां प्रकृतीनामशुभत्वात्सर्वान्ति-विशुद्ध्यध्यवसायप्रयोगत एकस्थानकं रसं बध्नन्ति, तत एव बन्धमधिकृत्य चतुःस्थानपरिणताः प्राप्यन्ते । शेषास्तु सप्तदशव्यतिरिक्ताः शुभा अशुभा वा 'दुतिचउट्ठाणाउत्ति'–बन्धमधिकृत्य द्विस्थानकरसास्त्रिस्थानकरसाश्चतुःस्थानकरसाश्च न तु कदाचनाप्येकस्थानकरसाः । कथमेतदवसेयमिति चेत्, इह द्विधा प्रकृतयस्तद्यथा–शुभा अशुभाश्च । तत्राशुभप्रकृतीनामेकस्थानक-

रसबन्धसम्भवोऽनिवृत्तिबादरसम्परायाद्धायाः संख्येयेभ्यो भागेभ्यः परतः, भावोद्, तयो-श्चाध्यवसायस्थानासम्भवात्, परतोऽप्युत्कृष्टाः शतपत्रप्रकृतीर्व्यतिरिच्य शेषा अशुभप्रकृतयो बन्धमेव नायान्ति, तद्बन्धहेतुव्यवच्छेदात्। ये अपि केवलज्ञानावरणकेवलदर्शनावरणे बन्धमायातः, तयोरपि सर्वघातित्वाद् द्विस्थानक एव रसो बन्धमागच्छति, नैकस्थानकः, सर्वघातिनीनां जघन्यपदेऽपि द्विस्थानकरसस्य सम्भवात्। यास्तु शुभाः प्रकृतयस्तासामत्यन्तविशुद्धो वर्तमानश्चतुःस्थानकमेव रसं बध्नाति, न त्रिस्थानकं द्विस्थानकं वा। मन्दमन्दतरविशुद्धो तु वर्तमानस्त्रिस्थानकं वा बध्नाति द्विस्थानकं वा, यदात्यन्तविशुद्धसंक्लेशाद्धायां वर्तते, तदा तस्य शुभप्रकृतयो बन्धमेव नायान्ति, कुतस्तद्गतरसस्थानचिन्ता?। या अपि नरकगतिप्रायोग्यं बध्नतोऽतिसंक्लिष्टस्यापि वैक्रियतैजसादिकाः प्रकृतयो बन्धमायान्ति, तासामपि तथास्वाभाव्याद् द्विस्थानकस्यैव रसस्य बन्धः, नैकस्थानकस्य, एतच्चाग्रे स्वयमेव वक्ष्यति, यदिह प्रस्तावागतमुक्तम्। तत इत्थं शेषप्रकृतीनामेकस्थानकरसबन्धासम्भवाद् सम्यगीरितमुक्तं द्विचतुःस्थानपरिणताः शेषाः प्रकृतय इति।" पञ्च० म० प्र० प० ३१ द्वि० ११४।

पृ० १ पं० १८ 'शेषास्तु'—"शेषाणामशुभानामपि मत्यादिज्ञानावरणीयादिसप्तदशप्रकृतिव्यतिरिक्तानामशुभप्रकृतीनां नैकस्थानकरसबन्धसम्भवो यत्—यस्मात् कारणात् क्षपकेतरेषां क्षपकस्यापूर्वकरणस्य इतरयोरप्रमत्तप्रमत्तसंयतयोर्न तादृशी शुद्धिर्येन एकस्थानकरसबन्धो, यदा तु एकस्थानकरसबन्धयोग्या परमप्रकर्षप्राप्ता विशुद्धिरनिवृत्तिबादरसंपरायाद्धायाः संख्येयेभ्यो भागेभ्यः परतो जायते तदा बन्धमेव न ता आयान्तीति न तासामेकस्थानको रसः। तथा शुभानामपि मिथ्यादृष्टिः संक्लिष्टो तु निश्चितं नैकस्थानकं रसं बध्नाति, यस्मात्तासां शुभप्रकृतीनामतिसंक्लिष्टे मिथ्यादृष्टौ बन्धो न भवति किन्तु मनाग् विशुद्ध्यमाने, संक्लेशोत्कर्षे च शुभप्रकृतीनामेकस्थानकरसबन्धसम्भवो न तदभावे, तदभावात्तासामपि जघन्यपदेऽपि द्विस्थानक एव रसः, नैकस्थानकः, यास्त्वतिसंक्लिष्टेऽपि मिथ्यादृष्टौ नरकगतिप्रायोग्या वैक्रियतैजसादिकाः शुभप्रकृतयो बन्धमायान्ति, तासामपि तथास्वाभाव्याज्जघन्यतोऽपि द्विस्थानक एव रसो बन्धमधिगच्छति नैकस्थानकः।" पञ्च० म० प्र० प० ५१ द्वि० १४६।

पृ० ४ पं० २ 'न च, यथा'—"ननु यथा श्रेण्यारोहेऽनिवृत्तिबादरसम्परायाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु परतोऽतिविशुद्धिसम्भवान्मतिज्ञानावरणीयादीनामशुभप्रकृतीनामेकस्थानकं रसं बध्नाति, तथा क्षपकश्रेण्यारोहे सूक्ष्मसम्परायचरमद्विचरमादिषु समयेषु वर्तमानोऽतीवविशुद्धत्वात्केवलद्विकस्य केवलज्ञानावरणकेवलदर्शनावरणरूपस्य किं नैकस्थानकं रसं निर्वर्तयति?, केवलद्विकं ह्यशुभमतिविशुद्धस्य बन्धकेषु क्षपकश्रेण्यारूढः सूक्ष्मसम्परायः, ततो मतिज्ञानावरणीयादेरिव सम्भवति केवलद्विकस्याप्येकस्थानकरसबन्धः स किं नोक्तः? इति प्रष्टुरभिप्रायः। तथा हास्यादिषु पदीयसम्योरर्थं प्रसमेयात्। हास्यादीनां—हास्यरतिभयजुगुप्सानामशुभत्वात् अपूर्वोऽपूर्वकरणो हास्यादिबन्धकानां मध्ये यस्मादतिविशुद्धिप्रकर्षप्राप्तत्वात्। शुभादीनां च शुभप्रकृतीनां मिथ्यादृष्टिरतिसंक्लिष्टः संक्लेशप्रकर्षसम्भवे हि शुभप्रकृतीनामेकस्थानकोऽपि रसबन्धः सम्भाव्यते, इति कथमेकस्थानकं रसं न बध्नाति?, येन

औदयिकभावः मतिश्रुतावरणचक्षुर्दर्शनावरणान्तरायप्रकृतीनां तु सदैव देशघातिनामेव रसस्पर्द्धकानामुदयः न सर्वघातिनां तेन सर्वदापि तासामौदयिकक्षायोपशमिको भावो संमिश्रो प्राप्यते, न केवल औदयिकः ।” पञ्च म प्र गा ३ पृ १११ ।

पृ० ५ पं० २० 'विपाकोदयेऽपि' — “आह — क्षायोपशमिको भावः कर्मणामुदये सति भवति अनुदये वा ? । न तावदुदये विरोधात् । तथाहि — क्षायोपशमिको भाव उदयावलिकाप्रविष्टस्यांशस्य क्षये सति अनुदितस्य चोपशमे विपाकोदयविष्कम्भलक्षणे प्रादुर्भवति नान्यथा ततो यद्युदयः कथं क्षयोपशमः, क्षयोपशमश्चेत् कथमुदयः इति । अथानुदय इति पक्षः तथा सति किं तेन क्षायोपशमिकेन भावेन ?, उदयाभावादेव विवक्षितफलसिद्धेः । तथाहि मतिज्ञानादीनि मतिज्ञानावरणाद्युदयाभावादेव सेत्स्यन्ति किं क्षायोपशमिकभावपरिकल्पनेन ? । उच्यते । उदये क्षायोपशमिको भावः । न च तत्र विरोधः । यत आह — इह ज्ञानावरणीयादीनि कर्माणि ध्रुवबन्धित्वात् ध्रुवोदयानि, ततस्तेषामुदये एव क्षयोपशमो घटते नानुदये, उदयाभावे तेषामेवासम्भवात् । तत उदय एवाविरुद्धः क्षायोपशमिको भावः । यदपि विरोधोद्भावने कथं 'यद्युदयः कथं क्षयोपशमः' इत्यादि तदप्ययुक्तम् । देशघातिस्पर्धकानामुदयेऽपि कतिपयदेशघातिस्पर्धकापेक्षया यथोक्तक्षयोपशमाविरोधात् । स च क्षयोपशमोऽनेकभेदः तथाद्रव्यक्षेत्रकालादिसामग्रीतो वैचित्र्यसम्भवादनेकप्रकारः । उदय एवाविरुद्ध एष क्षायोपशमिको भावो यदि भवति तर्हि न सर्वप्रकृतीनां किन्तु कासामेव कर्मणां ज्ञानावरणदर्शनावरणान्तरायाणाम् । मोहनीयस्य तर्हि का वार्ता ? इति चेत् । अत आह — मोहनीयस्य प्रदेशोदये क्षायोपशमिको भावोऽविरुद्धः न विपाकोदये । यतोऽनन्तानुबन्ध्यादिप्रकृतयः सर्वघातिन्यः, सर्वघातिनीनां च रसस्पर्धकानि सर्वाण्यपि सर्वघातीन्येव न देशघातीनि । सर्वघातीनि च रसस्पर्धकानि स्वघात्यं गुणं सर्वात्मना घ्नन्ति न देशतः, ततस्तेषां विपाकोदये न क्षयोपशमसंभवः, किन्तु प्रदेशोदये । ननु प्रदेशोदयेऽपि कथं क्षायोपशमिकभावसम्भवः ?, सर्वघातिरसस्पर्द्धकप्रदेशानां सर्वस्वघात्यगुणघातनस्वभावत्वात् । तदयुक्तम्, वस्तुतत्त्वापरिज्ञानात्, ते हि सर्वघातिरसस्पर्द्धकप्रदेशास्तथाविधाध्यवसायविशेषतो मनाक्मन्दानुभावीकृत्य विरलविरलतया वेद्यमानदेशघातिरसस्पर्द्धकेष्वन्तःप्रवेशिता न यथावस्थितमात्ममाहात्म्यं प्रकटयितुं समर्थाः, ततो न ते क्षयोपशमहन्तारः, इति न विरुध्यते प्रदेशोदये क्षायोपशमिको भावः । 'अणेगभेओ' त्ति इहानेकशब्दस्याधिकार्थसंसूचनात् मिथ्यात्वाद्यद्वादशकषायवर्जितानां शेषमोहनीयप्रकृतीनां प्रदेशोदये विपाकोदये वा क्षयोपशमोऽविरुद्ध इति द्रष्टव्यम् तासां देशघातित्वात् । तत्राप्ययं विशेषः — ताः शेषा मोहनीयप्रकृतयोऽध्रुवोदयाः, ततो विपाकोदयाभावे क्षायोपशमिके भावे विजृम्भमाणे प्रदेशोदयसम्भवेऽपि न ता मनागपि देशघातिन्यो भवन्ति । विपाकोदये तु प्रवर्त्तमाने क्षायोपशमिकभावे मनाग्मालिन्यमात्रकारित्वाद्देशघातिन्यो भवन्ति ।” पञ्च म प्र गा २८ पृ ११२ ।

पृ० ६ पं० ६ 'कर्मप्रकृति' — गा० १२–१४ । मलय० पृ० ७७–८ ।

पृ० ६ पं० १४ 'सुयं तु' —

“इंदियमणोनिमित्तं जं विण्णाणं सुयाणुसारेणं ।
निययत्थुत्तिसमत्थं तं भावसुयं मई सेसं ॥” विशेषा० गा० १०० ।

"इन्द्रियाणि च स्पर्शनादीनि मनश्च इन्द्रिय-मनांसि तानि निमित्तं यस्य तदिन्द्रियमनोनिमित्तम्। इन्द्रिय-मनोद्वारेण यद्विज्ञानं जायत इत्यर्थः। तत् किम्?, इत्याह—तद् भावश्रुतं श्रुतज्ञानमित्यर्थः। इन्द्रियमनोनिमित्तं च मतिज्ञानमपि भवति अतस्तद्व्यवच्छेदार्थमाह—श्रुतानुसारेण इति। श्रूयत इति श्रुतम्—द्रव्यश्रुतरूपं शब्द इत्यर्थः। स च सङ्केतविषयपरोपदेशरूपः श्रुतग्रन्थात्मकश्चेह गृह्यते। तदनुसारेणैव यदुत्पद्यते तत् श्रुतज्ञानम्, नान्यत्। इदमुक्तं भवति—सङ्केतकालप्रवृत्तं श्रुतग्रन्थसम्बन्धिनं वा घटादिशब्दमनुसृत्य वाच्यवाचकभावेन संयोज्य 'घटो घटः' इत्याद्यन्तर्जल्पाकारमन्तःशब्दोल्लेखान्वितमिन्द्रियादिनिमित्तं यज्ज्ञानमुदेति तच्छ्रुतज्ञानमिति। तच्च कथंभूतम्? इत्याह—निजकार्योक्तिसमर्थमिति। निजकः स्वस्मिन् प्रतिभासमानो योऽसौ घटादिरर्थः तस्योक्तिः—परस्मै प्रतिपादनम्, तत्र समर्थं क्षमं—निजकार्योक्तिसमर्थम्। अयमिह भावार्थः। शब्दोल्लेखसहितं विज्ञानमुत्पन्नं स्वप्रतिभासमानार्थप्रतिपादकं शब्दं जनयति। तेन च परः प्रत्याय्यते इत्येवं निजकार्योक्तिसमर्थमिदं भवति अभिलाप्यवस्तुविषयमिति यावत्। स्वरूपविशेषणं चैतत्, श्रुतानुसारेणोत्पन्नज्ञानस्य निजकार्योक्तिसामर्थ्याव्यभिचारात्। 'मई सेसं' ति शेषम्—इन्द्रियमनोनिमित्तमश्रुतानुसारेण यदवग्रहादिज्ञानं तत् मतिज्ञानमित्यर्थः।" विशेषा० टी० १ ।

पृ० १ पं० १९ 'तेन न'—"आह कश्चित्—ननु यदि शब्दोल्लेखसहितं श्रुतज्ञानमिष्यते शेषं तु मतिज्ञानं तदा वक्ष्यमाणस्वरूपोऽवग्रह एव मतिज्ञानं स्यात् न पुनरीहादयः, तेषां शब्दोल्लेखसहितत्वात्, मतिज्ञानभेदत्वेन चैते प्रसिद्धाः, तत् कथं श्रुतज्ञानलक्षणस्य नातिव्याप्तिदोषः, कथं च न मतिज्ञानस्याव्याप्तिप्रसंगः? । अपरं च—अङ्गानङ्गप्रविष्टेषु "अक्खर सन्नी सम्मं साईयं खलु सपज्जवसियं च" इत्यादिषु च श्रुतभेदेषु मतिज्ञानभेदस्वरूपाणामवग्रहादीनामभावात् सर्वस्यापि तस्य मतिज्ञानत्वप्रसङ्गात्, मतिज्ञानभेदानां चेहापायादीनां साभिलापत्वेन श्रुतज्ञानत्वप्रसक्तेरवग्रहमात्ररूपतैव शेषस्य स्यात्।

अत्रोच्यते—यत् तावदुक्तम्—अवग्रह एव मतिज्ञानं स्यात् न त्वीहादयः, तेषां शब्दोल्लेखसहितत्वात्। तदयुक्तम्। यतो यद्यपीहादयः साभिलापाः, तथापि न तेषां श्रुतरूपता, श्रुतानुसारिण एव साभिलापज्ञानस्य श्रुतत्वात्। अथावग्रहादयः श्रुतनिश्रिता एव सिद्धान्ते प्रोक्ताः, युक्तितोऽपि चेहादिषु शब्दाभिलापाः सङ्केतकालप्रवर्तितशब्दानुसरणमन्तरेण न संगच्छन्ते अतः कथं न तेषां श्रुतानुसारित्वम्? । तदयुक्तम्। पूर्वं श्रुतपरिकर्मितमतेरेवैते समुपजायन्त इति श्रुतनिश्रिता उच्यन्ते न पुनर्व्यवहारकाले श्रुतानुसारित्वमेतेष्वस्ति। यदपि युक्तितोपि चेत्याद्युक्तम् तदपि न समीचीनम्। सङ्केतकालप्रवर्तितशब्दपरिकर्मितबुद्धीनां व्यवहारकाले तदनुसरणमन्तरेणापि विकल्पपरंपरापूर्वकविविधवचनप्रवृत्तिदर्शनात्। न हि पूर्वप्रवृत्तसङ्केताः अधीतश्रुतग्रन्थाश्च व्यवहारकाले प्रतिविकल्पन्ते 'एतच्छब्दवाच्यत्वेनैतत् पूर्वं मयाऽवगतम्' इत्येवंरूपं सङ्केतम्, तथाऽमुकस्मिन् ग्रन्थे 'एतदित्थमभिहितम्' इत्येवं श्रुतग्रन्थं चानुसरन्तो दृश्यन्ते, अभ्यासपाटववशात् तदनुसरणमन्तरेणाप्यनवरतं विकल्पभाषणप्रवृत्तेः। यत्र तु श्रुतानुसारित्वं तत्र श्रुतरूपताऽस्माभिरपि न निषिध्यते। तस्मात् श्रुतानु-सारित्वाभावेन शब्दाभिलापवत्त्वेऽपि ईहाऽपायधारणानां मतिज्ञानत्वात् न मतिज्ञानस्या-

स्याऽव्याप्तिदोषः, श्रुतत्वपर्यायाश्च श्रुतानुसारिष्वेव साभिलापज्ञानविशेषेषु भावात् न श्रुतलक्षणस्याऽतिव्याप्तिकृतो दोषः । अपरं चाङ्गाऽनङ्गप्रविष्टादिश्रुतभेदेषु मतिपूर्वमेव श्रुतमिति वक्ष्यमाणवचनात् प्रथमं शब्दावग्रहणकालेऽवग्रहादयः समुपजायन्ते, एते चाऽश्रुतानुसारित्वात् मतिज्ञानम्, यस्तु तेष्वङ्गाऽनङ्गप्रविष्टश्रुतभेदेषु श्रुतानुसारी ज्ञानविशेषः स श्रुतज्ञानम् । तदङ्गाऽनङ्गप्रविष्टादिश्रुतभेदानां साकल्येन मतिज्ञानत्वाभावात्, ईहादिषु च विशेषेषु श्रुतानुसारित्वाभावेन श्रुतज्ञानत्वासम्भवात् नोभयलक्षणसङ्कीर्णतादोषोऽप्युपपद्यते इति सर्वं सुस्थम् । न चेह मतिश्रुतयोः परमाणु-करिणोरिवाऽऽत्यन्तिको भेदः समन्वेषणीयः, यतः प्रागिहैवोक्तम्–विशिष्टः कश्चिद् मतिविशेष एव श्रुतम्, पुरस्तादपि च वक्ष्यते–वल्कसदृशं मतिज्ञानं तज्जनितदवरिकारूपं श्रुतज्ञानम्, न च वल्कशुम्बयोः परमाणुकुञ्जरवदात्यन्तिको भेदः, किन्तु कारणकार्यभावकृत एव, स चेहापि विद्यते, मतेः कारणत्वेन, श्रुतस्य तु कार्यत्वेनाऽभिधास्यमानत्वात् । न च कारणकार्ययोरैकान्तिको भेदः, कनककुण्डलादिषु, मृत्पिण्डकुम्भादिषु च तथाऽदर्शनात् । तस्मादवग्रहापेक्षयाऽनभिलापत्वात्, ईहापेक्षया तु साभिलापत्वात् साभिलापाऽनभिलापं मतिज्ञानम् अश्रुतानुसारि च, सङ्केतकालप्रवृत्तस्य श्रुतग्रन्थसम्बन्धिनो वा शब्दस्य व्यवहारकालेऽननुसरणात् । श्रुतज्ञानं तु साभिलापमेव, श्रुतानुसार्येव च, सङ्केतकालप्रवृत्तस्य श्रुतग्रन्थसम्बन्धिनो वा शब्दरूपस्य श्रुतस्य व्यवहारकालेऽवश्यमनुसरणादिति स्थितम् ॥" विशेष टी गा १ ।

पृ० ६ पं० २० 'अत एव कारणत्वेन'–"मतिपुव्वं सुयं" इति वचनात्प्रागन्ते मतिः पूर्वं यस्य तद् मतिपूर्वं श्रुतमुच्यते, न पुनर्मतिः श्रुतपूर्विका इति अनयोरयं विशेषः । यदि हि भिन्नत्वं मतिश्रुतयोर्भवेत् तदैवम्भूतो नियमेन पूर्वपश्चाद्भावो घटपटयोरिव न स्यात् । अस्ति चायम् । ततो भेद इति भावः । किमिति मतिपूर्वमेव श्रुतमुक्तम् इत्याह–यस्मात् कारणात् श्रुतस्य मतिः पूर्वं प्रथममेवोत्पद्यते । कुतः ? इत्याह–'पूरणपालणाओ' पृ पालनपूरणयोरर्थयोः पठ्यते, तस्य च पिपर्ति इति पूर्वम् इति निपात्यते । ततश्च श्रुतस्य पूरणात् पालनाच्च मतिर्यस्मात् पूर्वमेव युज्यते तस्मात् मतिपूर्वमेव श्रुतमुक्तम् । पूर्वशब्दश्चायमिह कारणपर्यायो द्रष्टव्यः, कार्यात् पूर्वमेव कारणस्य भावात् "सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिः" [ न्यायबि० १ १ ] इत्यादौ तथा दर्शनात् । ततश्च मतिपूर्वं श्रुतमिति कोऽर्थः ? । श्रुतज्ञानं कार्यं मतिस्तु तत्कारणम् ।" विशेष टी गा १ ५ ।

"श्रुतज्ञानलब्धेऽपि पूरणादयोऽर्थाः चिन्तितानुप्रेक्षणादीनन्तरेण कर्तुं न शक्यन्ते अनुप्रेक्षणादयश्च मतिज्ञानमेव इति सर्वथा श्रुतस्य मतिरेव कारणं, श्रुतं तु कार्यम् ।" विशेष टी गा १ ६ ।

"परस्तु मतेरपि श्रुतपूर्वतापादनेनाविशेषमुद्भावयन्नाह–परस्मात् शब्दं श्रुत्वा तद्विषया या मतिरुत्पद्यते सा श्रुतपूर्वा–श्रुतकारणैव । तथा च सति 'न मई सुयपुव्विय' त्ति यदुक्तं प्राक् तदयुक्तं प्राप्नोति ।

अत्रोत्तरमाह–परस्माच्छब्दमाकर्ण्य या मतिरुत्पद्यते सा, शब्दस्य द्रव्यश्रुतमात्रत्वात् द्रव्यश्रुतप्रभवा, न भावश्रुतकारणा । एतत् तु न केनापि वार्यते । किन्तु एतदेव वयं ब्रूमो

ननु च भावश्रुतात् मतिर्नेति–भावश्रुतपूर्विका मतिर्न भवति । द्रव्यश्रुतप्रभवा तु भवतु को दोषः ? ।" विशेष० टी० गा० १२।

"ननु भावश्रुतात् मतिः किं सर्वथा न भवति ? । भावश्रुतात् मतिः कार्यतयैव नास्तीति । क्रमस्तु मतिर्न्युतीयेव न । किन्तर्हि ? क्रमशः सा भवति इत्येवं सर्वोऽपि मन्यते अन्यथा आमरणमपि श्रुतमात्रोपयोगप्रसङ्गात् । मतः श्रुतोपयोगो जन्यते । तदुपरमे तु नियमकारणाभावात् सर्वेव भूत्वा पुनरपि मतिरवतिष्ठते पुनस्तस्यैव श्रुतम् । तथैव च मतिः । इदमुक्तं भवति–यथा सामान्यभूतेन सुवर्णेन अविशेषरूपाः कटकाऽङ्गुलीयकादयो जन्यन्ते, अतस्ते तत्कार्यव्यपदेशं लभन्त एव सुवर्णं स्वकारणत्वात् तत्कार्यतया न व्यवह्रियते, तस्य कारणान्तरेभ्यः सिद्धत्वात्, कटकाद्यविशेषोपरमे तु सुवर्णोपादानं क्रमेण न निवार्यते; एवं मत्यापि सामान्यभूतया अविशेषरूपश्रुतोपयोगो जन्यते, अत तत्कार्यं स लभ्यते, मतिस्वकारणत्वात् तत्कार्यतया न व्यवह्रियते, तस्या हेत्वन्तरात् सदा सिद्धत्वात्, सविशेषभूतश्रुतोपयोगोपरमे तु क्रमायातं मतिज्ञानं न निवार्यते, आमरणान्तं केवलश्रुतोपयोगप्रसङ्गात् ।" विशेष० टी० गा० ११ ।

पृ० ६ पं० २६ 'कथं तर्हि श्रुत'– 'आभिणिबोहियनाणं दुविहं पण्णत्तं तं जहा सुयनिस्सियं च असुयनिस्सियं च ।" नन्दी सू० २६ ।

"यत्र शास्त्रपरिकर्मितमतेरुत्पादकाले शास्त्रार्थपर्यालोचनमनपेक्ष्यैव यदुपजायते मतिज्ञानं तत् श्रुतनिश्रितम्–अवग्रहादि । यत्पुनः सर्वथा शास्त्रसंस्पर्शरहितस्य तथाविधक्षयोपशमभावत एवमेव यथावस्थितवस्तुसंस्पर्शि मतिज्ञानमुपजायते तत् अश्रुतनिश्रितमौत्पत्तिक्यादि ।" नन्दी म० पृ० १४४ A ।

"यद्येवं श्रुतनिश्रितमवग्रहादिकमात्रात् विज्ञान्यथात् स्वरूपमजानानः परो बुद्धिविपर्यस्ताक्षोऽपि निश्चलीभूता आह–ननु श्रुतनिश्रितमेवावग्रहादिक सूत्रे केन प्रकारेण भणितम् ? उच्यते–श्रुतं द्विविधं–परोपदेशः आगमग्रन्थश्च । व्यवहारकालात् पूर्वं तेन श्रुतेन कृत उपकारः संस्काराधायकत्वो यस्य तत् कृतश्रुतोपकारम् । व्याख्यानकाले तु व्यवहारकाले तस्य पूर्वप्रवृत्तस्य संस्काराधायकश्रुतस्यानपेक्षमेव प्रवर्तते तत् श्रुतनिश्रितमुच्यते न तु तत्काल निश्चयमनुसरणमात्रेण इति ।" विशेषा० टी० गा० १६८ ।

पृ० ७ पं० १ 'मतिज्ञानमौत्पत्तिक्यादि'–"असुयनिस्सियं चउव्विहं पण्णत्तं, तंजहा–उप्पत्तिया वेणइया कम्मया परिणामिया ।" नन्दी सू० २६ ।

"पुव्वं अदिट्ठमस्सुयमवेइयतक्खणविसुद्धगहियत्था ।
अव्वाहयफलजोगा बुद्धी उप्पत्तिया नाम ॥
भरनित्थरणसमत्था तिवग्गसुत्तत्थगहियपेयाला ।
उभओलोगफलवई विणयसमुत्था हवइ बुद्धी ॥
उवओगदिट्ठसारा कम्मपसंगपरिघोलणविसाला ।
साहुक्कारफलवई कम्मसमुत्था हवइ बुद्धी ॥
अणुमाणहेउदिट्ठंतसाहिया वयविवागपरिणामा ।
हियनिस्सेयसफलवई बुद्धी परिणामिया नाम ॥"–नन्दी सू० २७ ।

"अश्रुतनिश्रितं चतुर्विधं प्रज्ञप्तम्, तद्यथा—उत्पत्तिरेव न शास्त्राभ्यासकर्मपरिशीलनादिकं प्रयोजन—कारणं यस्याः सा औत्पत्तिकी। ननु सर्वस्या बुद्धेः कारणं क्षयोपशमः तत्कथमुच्यते—उत्पत्तिरेव प्रयोजनमस्या इति ? । उच्यते—क्षयोपशमः सर्वबुद्धिसाधारणः ततो नासौ भेदेन प्रतिपत्तिनिबन्धनं भवति, अथ च बुद्ध्यन्तरादभेदेन प्रतिपत्त्यर्थं व्यपदेशान्तरं कर्तुमारभ्यम्, तत्र व्यपदेशान्तरनिमित्तमत्र न किमपि विनयादिकं विद्यते केवलमेवमेव तथोत्पत्तिरिति सैव साक्षान्निर्दिष्टा। तथा विनयो—गुरुशुश्रूषा स प्रयोजनमस्या इति वैनयिकी। तथा, अनाचार्यकं कर्म, साचार्यकं शिल्पम्, अथवा कादाचित्कं शिल्पम्, सर्वकालिकं कर्म—कर्मणो जाता कर्मजा॥ तथा परि समन्तान्नमनं परिणामः सुदीर्घकालपूर्वापरपर्यालोचनजन्य आत्मनो धर्मविशेषः स प्रयोजनमस्याः सा पारिणामिकी।" नन्दी म पृ १४४।

"आसां बुद्धीनां विशेषार्थो कथानकादवसेयः"—नन्दी म पृ १४५।

पृ० ७ पं० ४ 'पुव्विं'—व्याख्या—"व्यवहारकालात् पूर्वं यथोक्तरूपेण श्रुतेन परिकर्मिता आहितसंस्कारा मतिर्यस्य स तथा तस्य साम्प्रतं व्यवहारकाले श्रुतातीतं श्रुतनिरपेक्षं ज्ञानमुपजायते तत् श्रुतनिश्रितमवग्रहादिकं सिद्धान्ते प्रतिपादितम्। इतरत् पुनः अश्रुतनिश्रितम् तच्च औत्पत्तिक्यादिमतिचतुष्कं द्रष्टव्यम्"—विशेषा टी गा १६९।

पृ० ७ पं० ९ 'लब्धियौगपद्येऽपि'—"द्विविधे मतिश्रुते तदावरणक्षयोपशमरूपलब्धितः, उपयोगतश्च। तत्र लब्धितो ये मतिश्रुते ते एव समकालं भवतः। यस्त्वनयोरुपयोगः स युगपद् न भवत्येव, किन्तु केवलज्ञान-दर्शनयोरिव तथास्वाभाव्यात् क्रमेणैव प्रवर्तते। अत्र यदि लब्धिमङ्गीकृत्य मतिपूर्वता श्रुतस्योक्ता भविष्यतीति चेत्। नैवम्। इह हि श्रुतोपयोग एव मतिप्रभवोऽङ्गीक्रियते, न लब्धिरिति भावः। श्रुतोपयोगो हि विशिष्टमन्तर्जल्पाकारं तदनुसारिज्ञानमभिधीयते, तच्च अवग्रहेहादीनन्तरेण आकस्मिकं न भवति, अवग्रहादयश्च मतिरेव इति तत्पूर्वता श्रुतस्य न विरुध्यते।" विशेषा टी गा १०८।

पृ० ७ पं० १२ 'धारणादिरहितानाम्'—"इह यद्यप्येकेन्द्रियाणामाहारादिसंज्ञा विद्यते तथा सूत्रे अनेकशोऽभिधानात्। संज्ञा च अभिलाष उच्यते यत उक्तम् आवश्यकटीकायाम्—आहारसंज्ञा आहाराभिलाषः क्षुद्वेदनीयप्रभवः खल्वात्मपरिणामविशेषः इति। अभिलाषश्च 'ममैवंरूपं वस्तु पुष्टिकारि तद्यदीदमवाप्यते ततः समीचीनं भवति' इत्येवं शब्दार्थोल्लेखानुविद्धः स्वपुष्टिनिमित्तभूतप्रतिनियतवस्तुप्राप्त्यध्यवसायः स च श्रुतमेव तस्य शब्दार्थपर्यालोचनात्मकत्वात्। शब्दार्थपर्यालोचनात्मकत्वं च 'ममैवंरूपं वस्तु पुष्टिकारि तद्यदीदमवाप्यते' इत्येवमादीनां शब्दानामन्तर्जल्पाकाररूपाणामपि विवक्षितार्थवाचकतया प्रवर्तमानत्वात्। श्रुतस्य चैवंलक्षणत्वात्। ......शब्दार्थपर्यालोचनं च नाम वाच्यवाचकभावपुरस्सरीकारेण शब्दसंसृष्टस्य अर्थस्य प्रतिपत्तिः, केवलमेकेन्द्रियाणामव्यक्तमेव।" नन्दी म पृ १४०।

"यद्यपि एकेन्द्रियाणां करणवैकल्यात् द्रव्यश्रुतं नास्ति, तथापि व्यापादयन्त्याः शाप्यादेरिवासम्यक्करणस्य असम्भवकार्ये च श्रुतावरणक्षयोपशममात्ररूपं भावश्रुतं केवलिदृष्टम् ईदृशं मन्तव्यम्। न हि व्यापादयन्त्यां शाप्यादिः शब्दं न शृणोति न विकल्पयति इत्य

इति वाक्यार्थप्रतीतिः प्रादुर्भवति । ततः प्रतिविशिष्टापवादप्रक्षेपेण 'आज्ञा प्रधानम्' इति महावाक्यार्थधीः स्यात् । ततः पुरःसरम् 'आज्ञार्थिना प्रवर्तितव्यम्' इत्यैदम्पर्यार्थधीरिति । न चैवं प्रकारं विना निराकाङ्क्षप्रतीतिः सिध्येत्, पदार्थमात्रज्ञानात् पदार्थस्मारितविशेषार्थजिज्ञासाशान्त्या आकाङ्क्षाया अनुच्छेदात्, वाक्यार्थस्यापर्यवसितत्वात् ॥ १५८ ॥

आगमेऽपि तमाह–

हंतव्वा नो भूआ सव्वे इह पायडो च्चिय पयत्थो ।
मणमाईहिं पीडं सव्वेसिं चेव ण करिज्जा ॥ १५९ ॥

'सर्वाणि भूतानि न हंतव्यानि' इह प्रकट एव पदार्थः । मनआदिभिर्मनोवाक्कायैः पीडां बाधां सर्वेषामेव सत्त्वानामपि जीवानां न कुर्यात्, न विदध्यादिति ॥ १५९ ॥

आवन्नमकरणिज्जं एवं चेइहरलोयकरणाई ।
इय वक्कत्थो अ महावक्कत्थो पुण इमो एत्थ ॥ १६० ॥

एवं सति चैत्यगृहलोचकरणादिकमकरणीयं साधूनामगारिणां चापन्नम्, तथापि परपीडानुगमात् इत्येष वाक्यार्थमात्रगम्यः । महावाक्यार्थः पुनरयम् ॥ १६० ॥

अविहिकरणंमि दोसो तो विहिणा चेव होइ कायव्वं ।
अरहंतवयणओ पुण आणा धम्मम्मि सारो त्ति ॥ १६१ ॥

अविधिकरणेऽविहितविधाने चैत्यगृहलोचादेः, दोषो हिंसारूपः विधिकरणस्यानल्पदोषकारणस्वल्पविशुद्धिपरिणामजनितकर्माविशुद्धिसम्भवात् । तत् तस्मात् विधिनैव कर्तव्यं भवति चैत्यगृहलोचादौ । तदिदमुक्तम्–

"अविहिकरणंमि आणाविराहणा दुट्ठमेव एएसिं ।
ता विहिणा जइयव्वं ति" –[उपदेशपद गा० ८९०]

चैत्यगृहकरणविधिश्च–

"जिनभवनकरणविधिः शुद्धा भूमिर्दलं च काष्ठादि ।
भृतकानतिसन्धानं स्वाशयवृद्धिः समासेन ॥"

इत्यादिरभ्यूह्यः । लोचकर्मविधिस्तु–

"धुवलोओ अ जिणाणं वासावासेसु होइ थेराणं ।
तरुणाणं चउमासे वुड्ढाण होइ छम्मासे ॥"

इत्याद्युक्तः । ऐदम्पर्यार्थः पुनः 'आज्ञा धर्मे सारः' इति । तामन्तरेण धर्मबुद्ध्यापि कृतस्य निरवद्यत्वाभिमतस्यापि कार्यस्य निष्फलत्वादिति ॥ १६१ ॥

वाक्यान्तरमधिकृत्याह–

गंथं चएज्ज एत्थ वि सचेअणाचेअणं जए वत्थुं ।
एस पयत्थो पयडो वक्कत्थो पुण इमो होइ ॥ १६२ ॥

'ग्रन्थं त्यजेत्' इत्यत्रापि सचेतनमचेतनं च वस्तु अनेन गृह्णीयात् इति एव प्रकटः पदार्थः । वाक्यार्थः पुनरयं च वस्त्रमात्रकम्बलो भवति ॥ १६२ ॥

"प्राणी प्राणिज्ञानं घातकचित्तं च तद्गता चेष्टा ।
प्राणैश्च विप्रयोगः पञ्चभिरापद्यते हिंसा ॥"

किमेकान्तेनैव परिज्ञोपचितादिना कर्मोपचयो न भवत्येव ? । भवति कश्चिदल्पतर-मात्रेति दर्शयितुं श्लोकपश्चार्धमाह—'पुट्ठो' ति । तेन केवलमनोव्यापाररूपपरिज्ञोपचितेन केवलकायक्रियोत्थेन वाऽविज्ञोपचितेनेर्यापथेन स्वप्नान्तिकेन च चतुर्विधेनापि कर्मणा 'स्पृष्टः' ईषत्स्पृष्टः संस्पृष्टमात्रोऽसौ स्पर्शमात्रेणैव परमनुभवति । न तस्याधिको विपाकोऽस्ति । कुड्यापतितसिकतामुष्टिवत्स्पर्शानन्तरमेव परिशटतीत्यर्थः । अत एव तस्य चयाभावोऽभिधीयते । न पुनरत्यन्ताभाव इति । एवं च कृत्वा तद् 'अव्यक्तम्' अपरिस्फुटम् । खुरव्यारणे । अव्यक्तमेव, स्पष्टविपाकानुभवाभावात् । तदेवमव्यक्तं सहावद्येन—गर्ह्येण वर्तते तत्परिज्ञोपचितादिकर्मेति ॥ २५ ॥

ननु यद्यनन्तरोक्तं चतुर्विधं कर्म नोपचयं याति कथं तर्हि कर्मोपचयो भवतीत्येतदाशङ्क्याह—

संतिमे तउ आयाणा जेहिं कीरइ पावगं ।
अभिकम्मा य पेसा य मणसा अणुजाणिया ॥ २६ ॥

'सन्ति' विद्यन्ते अमूनि त्रीणि आदीयते स्वीक्रियते अमीभिः कर्म इत्यादानानि । एतदेव दर्शयति—यैरादानैः 'क्रियते' विधीयते, निष्पाद्यते 'पापकं' कल्मषं तानि चामूनि । तद्यथा—'अभिकम्येति' आभिमुख्येन क्रम्य प्राणिनं क्रान्त्वा—व्यापादनाभिमुखं चित्तं विधाय, यत्र स्वत एव प्राणिनं व्यापादयति तदेकं कर्मादानम् । तथा, अपरं च प्राणिघाताय प्रेष्यं समादिश्य यत्प्राणिव्यापादनं तद्द्वितीयं कर्मादानम् । तथा, अपरं व्यापादयन्तं मनसाऽनुजानीत इत्येतत् तृतीयं कर्मादानम् । परिज्ञोपचितादस्याय भेदः—तत्र केवलं मनसा चिन्तनम्, इह त्वपरेण व्यापाद्यमाने प्राणिन्यनुमोदनमिति ॥ २६ ॥

तदेवं यत्र स्वयं कृतकारितानुमतयः प्राणिपाते क्रियमाणे विद्यन्ते क्लिष्टाध्यवसायस्य प्राणा-तिपातश्च तत्रैव कर्मोपचयो नान्यत्र इति दर्शयितुमाह—

एते उ तउ आयाणा जेहिं कीरइ पावगं ।
एवं भावविसोहीए निव्वाणमभिगच्छति ॥ २७ ॥

तुरवधारणे । एतान्येव पूर्वोक्तानि त्रीणि व्यस्तानि समस्तानि वा आदानानि यैर्दुष्टाध्यवसायसव्यपेक्षैः पापकं कर्म उपचीयते इति । एवं च स्थिते यत्र कृतकारितानुमतयः प्राणिव्यपरोपणं प्रति न विद्यन्ते तथा भावविशुद्ध्या अरक्तद्विष्टबुद्ध्या प्रवर्तमानस्य सत्यपि प्राणातिपाते केवलेन मनसा, कायेन वा मनोभिसन्धिरहितेन, उभयेन वा विशुद्धबुद्धेर्न कर्मोपचयः । तदभावाच्च निर्वाणं सर्वद्वन्द्वोपरतिलक्षणम् अभिगच्छति आभिमुख्येन प्राप्नोतीति ॥ २७ ॥

भावशुद्ध्या प्रवर्तमानस्य कर्मबन्धो न भवतीत्यत्रार्थे दृष्टान्तमाह—

पुत्तं पिया समारब्भ आहारेज्ज असंजए ।
भुंजमाणो य मेहावी कम्मणा नोवलिप्पइ ॥ २८ ॥

पुत्रं अपत्यं पिता जनकः 'समारभ्य' व्यापाद्य आहारार्थं कस्याञ्चित्तथाविधायामापदि तदुद्धरणार्थं अरक्तद्विष्टः 'असंयतो' गृहस्थस्तत्पिशितं भुञ्जानोऽपि चशब्दस्यापिशब्दार्थ-त्वादिति, तथा मेधाव्यपि संयतोऽपीत्यर्थः । तदेवं गृहस्थो भिक्षुर्वा शुद्धाशयः पिशिताश्यपि कर्मणा पापेन नोपलिप्यते नाभिसम्बध्यत इति । यथा चात्र पितुः पुत्रं व्यापादयतोऽरक्त-द्विष्टमनसः कर्मबन्धो न भवति, तथाऽन्यस्यापि अरक्तद्विष्टान्तःकरणस्य प्राणिवधे सत्यपि न कर्मबन्धो भवतीति ॥ २८ ॥

साम्प्रतमेतद्दूषणायाह–

मणसा जे पउस्सन्ति चित्तं तेसिं ण विज्जइ ।
अणवज्जमतहं तेसिं ण ते संवुडचारिणो ॥ २९ ॥
इच्चेयाहिं य दिट्ठीहिं सातागारवणिस्सिया ।
सरणंति मन्नमाणा सेवती पावगं जणा ॥ ३० ॥
जहा अस्साविणिं नावं जाइअंधो दुरूहिया ।
इच्छई पारमागंतुं अंतरा य विसीयई ॥ ३१ ॥
एवं तु समणा एगे मिच्छदिट्ठी अणारिया ।
संसारपारकंखी ते संसारं अणुपरियट्टंति ॥ ३२ ॥

ये हि कुतश्चिन्निमित्तात् मनसा अन्तःकरणेन 'प्रदुष्यन्ति' प्रद्वेषमुपयान्ति तेषां वधपरि-णतानां शुद्धं चित्तं न विद्यते । तदेवं यत्तैरभिहितम्–यथा केवलमनःप्रद्वेषेऽपि अनवद्यं कर्मोपचयाभाव इति तत् तेषां 'अतथ्यम्' असत्यमभिधानमिति । यतो न ते संवृतचारिणो मनसोऽशुद्धत्वात्, तथाहि–कर्मोपचये कर्तव्ये मन एव प्रधानं कारणं यतः तैरपि मनो-रहितकेवलकायव्यापारे कर्मोपचयाभावोऽभिहितः, ततश्च यद् यस्मिन् सति भवति असति तु न भवति, तत् तस्य प्रधानं कारणमिति । ननु तस्यापि कायचेष्टारहितस्याकारणत्वमुक्तम् । सत्यम्, उक्तम् अयुक्तं तु उक्तम् । यतो भवतैव 'एवं भावविशुद्ध्या निर्वाणमभिगच्छ-तीति' ब्रुवता मनस एवैकस्य प्राधान्यमभ्यधायि तथाऽन्यत्रापि अभिहितम्–

"चित्तमेव हि संसारो रागादिक्लेशवासितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥"

तथाऽन्यैरपि अभिहितम्–

"मतिविभव ! नमस्ते यत् समत्वेऽपि पुंसाम्,
परिणमसि शुभांशैः कल्मषांशैस्त्वमेव ।
नरकनगरवर्त्मप्रस्थिताः कष्टमेके,
उपचितशुभशक्त्या सूर्यसम्भेदिनोऽन्ये ॥"

तदेवं भवदभ्युपगमेनैव क्लिष्टमनोव्यापारः कर्मबन्धायेत्युक्तं भवति । तथा ईर्यापथेऽपि यदनुपयुक्तो याति ततोऽनुपयुक्ततैव क्लिष्टचित्ततेति कर्मबन्धो भवत्येव । अथोपयुक्तो याति ततोऽप्रमत्तत्वादबन्धक एव । तथा चोक्तम्–

"उच्चालियम्मि पाए इरियासमियस्स संकमट्ठाए ।
वावज्जेज्ज कुलिंगी मरेज्ज तं जोगमासज्ज ॥

"प्रमत्तविशेषणोपादानं अन्यतराभावे हिंसाऽभावज्ञापनार्थम् ॥ १२ ॥"... "श्लोकं कृत्वा चैकपाक्षिकः क्रियते—

"जले जन्तुः स्थले जन्तुराकाशे जन्तुरेव च ।
जन्तुमालाकुले लोके कथं भिक्षुरहिंसकः ॥"

इति चोद्यावकाश न लभते । भिक्षोर्ज्ञानध्यानपरायणस्य प्रमत्तयोगाभावात् । किं च सूक्ष्मस्थूलजीवाभ्युपगमात्—

"सूक्ष्मा न प्रतिपीड्यन्ते प्राणिनः स्थूलमूर्तयः ।
ये शक्यास्ते विवर्ज्यन्ते का हिंसा संयतात्मनः ॥" इति"—राजवा० ७.१३.१२.

"ननु प्रमत्तयोग एव हिंसा तदभावे संयतात्मनो यतेः प्राणव्यपरोपणेऽपि हिंसाऽनिष्टेरिति कश्चित् । प्राणव्यपरोपणमेव हिंसा प्रमत्तयोगाभावे तद्विधाने प्रायश्चित्तोपदेशात् । तथा तदुभयोपादानं सूत्रे किमर्थमित्यपरः । अत्रोच्यते—प्रमत्तविशेषणोपादानमन्यतराभावे हिंसाऽभावज्ञापनार्थम् । हिंसा हि द्वेधा । भावतो द्रव्यतश्च । तत्र भावतो हिंसा प्रमत्तयोग एव केवलः तत्र भावप्राणव्यपरोपणस्यावश्यंभावित्वात् । ततः प्रमत्तस्यात्मनः स्वात्मघातित्वात् रागाद्युत्पत्तेरेव हिंसात्वेन समये प्रतिपादनात् । द्रव्यहिंसा तु परद्रव्यप्राणव्यपरोपणं स्वात्मनो वा, तद्विधायिनः प्रायश्चित्तोपदेशो भावप्राणव्यपरोपणाभावात् तदसंभवात् प्रमत्तयोगः स्यात् । तद्धि पूर्वकस्य यतेरप्यवश्यंभावात् । ततः प्रमत्तयोगः प्राणव्यपरोपणं च हिंसेति ज्ञापनार्थं तदुभयोपादानं कृतं सूत्रे युक्तमेव ।" त० श्लो० ११

"पापं ध्रुवं परे दुःखात् पुण्यं च सुखतो यदि ।
अचेतनाकषायौ च बध्येयातां निमित्ततः ॥
पुण्यं ध्रुवं स्वतो दुःखात् पापं च सुखतो यदि ।
वीतरागो मुनिर्विद्वांस्ताभ्यां युञ्ज्यान्निमित्ततः ॥
विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।
अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥
विशुद्धिसंक्लेशाङ्गं चेत् स्वपरस्थं सुखासुखम् ।
पुण्यपापास्रवो युक्तो न चेद् व्यर्थस्तवार्हतः ॥" आप्तमी० ९२-९५

"अहिंसा भूतानां जगति विदितं ब्रह्म परमम्,
न सा तत्रारम्भोऽस्त्यणुरपि च यत्राश्रमविधौ ।
ततस्तत्सिद्ध्यर्थं परमकरुणो ग्रन्थमुभयम्,
भवानेवात्याक्षीन्न च विकृतवेषोपधिरतः ॥" बृहत्स्व० ११९

"अज्झप्पविसोहीए जीवनिकाएहिं संथडे लोए ।
देसियमहिंसगत्तं जिणेहिं तेलोक्कदरिसीहिं ॥ ७४७ ॥
उच्चालियम्मि पाए ईरियासमियस्स संकमट्ठाए ।
वावज्जेज्ज कुलिंगी मरिज्ज तं जोगमासज्ज ॥ ७४८ ॥
न य तस्स तन्निमित्तो बंधो सुहुमोवि देसिओ समए ।
अणवज्जो उ पओगेण सव्वभावेण सो जम्हा ॥ ७४९ ॥

नाणी कम्मस्स खयट्ठमुट्ठिओऽणुट्ठितो य हिंसाए ।
जयइ असढं अहिंसत्थमुट्ठिओ अवहओ सो उ ॥ ७५० ॥
तस्स असंचेययओ संचेययतो य जाइं सत्ताइं ।
जोगं पप्प विणस्संति नत्थि हिंसाफलं तस्स ॥ ७५१ ॥
जो य पमत्तो पुरिसो तस्स य जोग पडुच्च जे सत्ता ।
वावज्जंते नियमा तेसिं सो हिंसओ होई ॥ ७५२ ॥
जेवि न वाविज्जंति नियमा तेसिं पहिंसओ सो उ ।
सावज्जो उ पओगेण सव्वभावेण सो जम्हा ॥ ७५३ ॥
आया चेव अहिंसा आया हिंस त्ति निच्छओ एसो ।
जो होइ अप्पमत्तो अहिंसओ हिंसओ इयरो ॥ ७५४ ॥
जो य पओग जुंजइ हिंसत्थं जो य अन्नभावेण ।
अमणो उ जो पउंजइ इत्थ विसेसो महं वुत्तो ॥ ७५५ ॥
हिंसत्थं जुंजंतो सुमहं दोसो अणंतरो इयरो ।
अमणो य अप्पदोसो जोगनिमित्तं च विन्नेओ ॥ ७५६ ॥
रत्तो वा दुट्ठो वा मूढो वा जं पउंजइ पओगं ।
हिंसा वि तत्थ जायइ तम्हा सो हिंसओ होइ ॥ ७५७ ॥
न य हिंसामित्तेण सावज्जेणावि हिंसओ होइ ।
सुद्धस्स उ संपत्ती अफला भणिया जिणवरेहिं ॥ ७५८ ॥
जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स ।
सा होइ निज्जरणफला अज्झत्थविसोहिजुत्तस्स ॥ ७५९ ॥
परमरहस्समिसीणं समत्तगणिपिडगझरियसाराणं ।
परिणामियं पमाणं निच्छयमवलंबमाणाणं ॥ ७६० ॥
निच्छयमवलंबन्ता निच्छयओ निच्छयं अयाणंता ।
नासंति चरणकरणं बाहिरकरणालसा केइ ॥ ७६१ ॥
एयमिणं उवगरणं धारेमाणो विहीसुपरिसुद्ध ।
हवइ गुणाणायतणं अविहि असुद्धे अणाययणं ॥ ७६२ ॥" ओघनि० ।
"एवमहिंसाऽभावो जीवघणं ति न य तं जओऽभिहियं ।
सत्थोवहयमजीवं न य जीवघणं ति तो हिंसो ॥ १७६२ ॥

मन्येत यदि लोकस्याजीवपृथिव्यादिजीवघनत्वात् अहिंसाऽभावः । संयतैरपि अहिंसापालनमिव निर्वोढुमशक्यमिति भावः । तदेतद् न, यतोऽस्माभिरेवाभिहितमस्त्रादि—शस्त्रोपहतं पृथिव्यादिकमजीवं भवति । तदजीवत्वे चाहारोपकरणादिपरिभोगेन निर्वहत्येव यतीनां संयमः । न च 'जीवघनो लोकः' इत्येतावन्मात्रेणैव हिंसा संभवतीति ॥ १७६२ ॥

आह—ननु जीवाकुले लोकेऽवश्यमेव जीवघातः संभाव्यते जीवांश्च घ्नन् कथं हिंसको न स्यात्? इत्याह—

न य घायउ त्ति हिंसो नाघायंतो त्ति निच्छियमहिंसो ।
न विरलजीवमहिंसो न य जीवघणं ति तो हिंसो ॥ १७६३ ॥

त्वादेरनिवृत्तस्य, उपलक्षणत्वात् संयतस्य चाऽनुपयुक्तगमनागमनादि कुर्वतः। यामपि सत्त्वान् असौ सदैव न हन्ति तानप्याश्रित्य मन्तव्या। 'जे वि न वाविज्जन्ती नियमा तेसिं पि हिंसओ सो उ।' [ ओघनि० ७५१ ] इति वचनात्। यदा तु तस्यैव प्राणव्यपरोपणसंप्राप्तिर्भवति तदा सा द्रव्यतो भावतोपि हिंसा प्रतिपत्तव्या। यः पुनरध्यात्मना चेतःप्रणिधानेन शुद्धः उपयुक्तगमनागमनादिक्रियाकारीत्यर्थः। तस्य यदा कथमपि प्राणव्यपरोपणेन सह योगः संबन्धो न भवति, तदा द्विधापि द्रव्यतो भावतोऽपि च हिंसा न भवतीति भावः। तदेवं भगवत्प्रणीतप्रवचने हिंसाविषयाश्चत्वारो भङ्गा उपवर्ण्यन्ते। अत्र चाद्यभङ्गे हिंसायां व्याप्रियमाणकाययोगोपि यावत् तदुपयुक्ततया भगवद्भिरहिंसक एवोक्तः। ततो यदुक्तं भवता वधव्येनव्यापारं कुर्वतो हिंसा भवतीति तत्प्रवचनरहस्यानभिज्ञतासूचकमिति।" वृहत्० गा ३९३२-३९४५। उपदेशरहस्य गा ११६-११८। धर्मपरीक्षा गा ४०-८८। पुरुषार्थ ४२-८६। समयसार ४ २२-२६। मिलिन्दप्रश्न ४.८-१५;४ ७-३३। सुत्तनिपात २.२.४ ५,११;२.७.१८;२.१४ १९;३ ११ २७। धम्मपद ५० १२९ ११ ४ ५। मज्झिमनिकाये जीवकसुत्त-५५, उपालिसुत्त-५६। विनयपिटके महावग्ग ६.४ २;६ ४ ८; चुल्लवग्ग ७.२.७। अङ्गुत्तर १२.२१। बोधिचर्यावतार परि० ८ श्लो १०-१८। शिक्षासमुच्चय पृ ११३-११६,१५७। भगवद्गीता १८ १७। महाभारत शान्तिपर्व अ० १२४ श्लो ६५,६६; अ० २ ८ श्लो ६४ १११ श्लो ११-२। S B E. VOL. 50—अहिंसासम्बोऽत्र द्रष्टव्यः।

पृ० ७ पं० २१ 'गीतार्थ'—

"गीयत्थो जयणाए कडजोगी कारणंमि णिद्दोसो।
एगेसिं गीयकडो अरत्तदुट्ठो अ जयणाए॥"

वृहत्० ४९४६। उपदेशरहस्य गा १३३।

"इय दोसा उ अगीए गीयम्मि उ कालहीणकारिम्मि।
गीयत्थस्स गुणा पुण होंति इमे कालकारिस्स॥ ९५०॥
आयं कारणं गाढं वत्थुं जुत्तं ससत्ति जयणं च।
सव्वं च सपडिवक्खं फलं च विधिवं वियाणाइ॥ ९५१॥
सुंकादीपरिसुद्धे सइ लाभे कुणइ वाणिओ चिट्ठं।
एमेव य गीयत्थो आयं दट्ठुं समायरइ॥ ९५२॥
असिवाईसुंकत्थाणियमु किंचिसलियस्स तो पच्छा।
वायणवेयावच्चे लाभो तवसंजमज्झयणे॥ ९५३॥
नाणाइतिगस्सट्ठा कारण निक्कारणं तु तव्वज्जं।
अहिकब लिस विसइय सज्जक्खयरक्खमागाढ॥ ९५४॥
आयपरिवाई वत्थुं तेसिं चिय जुत्त होइ जं जोग्गं।
गीय परिणामगा वा वत्थुं इयरे पुण अवत्थु॥ ९५५॥
चिइ सारीरा सत्ती आयपरगया उ तं न हावेति।
जयणा खलु तिपरिरया अलंभे पच्छा पणगहाणी॥ ९५६॥
इह परलोगे य फलं इह आहाराइ इक्कमेक्कस्स।
सिद्धी सग्ग सुकुलत्ता फलं तु परलोइयं एयं॥ ९५७॥

त्संकोचविच्छिन्नविषयक एव शाब्दबोधो जायते इति न्यायनयः, यथा—घटत्वावच्छिन्नो घटपदशक्यः इति ज्ञानजन्यघटत्वावच्छिन्नोपस्थित्या जायमाने शाब्दबोधे घटत्वाव-च्छिन्नस्यैव विषयता तथापि क्वचित् बाधप्रतिसंधाने बाधितेतरत्वेन तुल्यमवच्छेदकरूपेणापि पद शाब्दबोधविषयता यथा घटेन जलमानय इत्यत्र जलानयने सच्छिद्रघटकरणकत्वं बाधितमिति प्रतिसंधाने तुल्यमवच्छेदकसच्छिद्रेतरत्वरूपेणैव घटस्य शाब्दबोधविषयता । भवति, तत्र हि सच्छिद्रेतरघटकरणकं जलानयनमिति शाब्दबोधात् ।

एवं मा हिंस्यात् सर्वा भूतानि इत्यत्र हिंसात्वसामान्यावच्छेदेन अनिष्टसाधनत्वबोध-जनकादपि विधिवाक्यात् अग्निषोमीयं पशुमालभेत इत्यादिविशेषहिंसाविषयकेष्टसाधनत्व-बोधकापवादसहकृतात् तदपवादेतरहिंसामात्र एव अनिष्टसाधनत्वविषयकः शाब्दबोधस्सं-पद्यते इति सापवादोत्सर्गविधिवाक्यस्थले एकेनैव शाब्दबोधेन कार्यसिद्धौ न औत्सर्गिकाप-वादिकवाक्यजन्ययोः भिन्नयोः शाब्दबोधयोः कल्पना सद्युक्तेति मीमांसकमतिसंमतवाक्य-बोधप्रक्रियानुगामिनः ।

पृ० ८ पं० २७ 'षट्स्थानपतितत्वं'—

"जं चोद्दसपुव्वधरा छट्ठाणगया परोप्परं होंति ।
तेण उ अणन्तभागो पण्णवणिज्जाण जं सुत्तं ॥ १४२ ॥

"यद् यस्मात् कारणात् चतुर्दशपूर्वधराः षट्स्थानपतिताः परस्परं भवन्ति, हीनाधि-क्येनेति शेषः । तथा हि—सकलाभिलाप्यवस्तुवेदितया य उत्कृष्टश्चतुर्दशपूर्वधरः, ततोऽन्यो हीनहीनतरादिः आगमे इत्थं प्रतिपादितः—तद्यथा—'अणंतभागहीणे वा, असंखिज्जभागहीणे वा, संखिज्जभागहीणे वा, संखिज्जगुणहीणे वा, असंखेज्जगुणहीणे वा, अणंतगुणहीणे वा' । यस्तु सर्वस्तोकाभिलाप्यवस्तुज्ञायकतया सर्वजघन्यः ततोऽन्य उत्कृष्ट उत्कृष्टतरादिरप्येवं बोध्यः । तद्यथा—'अणंतभागब्भहिए वा, असंखेज्जभागब्भहिए वा, संखिज्जभागब्भहिए वा, संखेज्जगुणब्भहिए वा, असंखेज्जगुणब्भहिए वा, अणंतगुणब्भहिए वा' । तदेवं यतः परस्परं षट्स्थानपतिताश्चतुर्दशपूर्वविदः, तस्मात् कारणात् यत् सूत्रं चतुर्दशपूर्वलक्षणं तत् प्रज्ञापनीयानां भावानामनन्तभाग एवेति । यदि पुनर्यावन्तः प्रज्ञापनीया भावास्तावन्तः सर्वेऽपि सूत्रे निबद्धा भवेयुः, तदा तद्वेदिनां तुल्यतैव स्यात्, न षट्स्थानपतितत्वमिति भावः ॥"—विशेषा टी ।

पृ० ९ पं० १ 'श्रव्यसंसृष्टार्थः'—"शृणोति वाच्यवाचकभावपुरस्सरं श्रवणविषयेन शब्देन सह संसृष्टमर्थं परिच्छिनत्त्यात्मा येन परिणामविशेषेण स परिणामविशेषः श्रुतम् ।" नन्दी म टी ७४ ।

पृ० ९. पं० ४ 'नन्दिसूत्रादौ'—नन्दी म टी ९१ ।

पृ० ९ पं० ८ 'पूर्वगतगाथायाम्'—"इतिपूर्वगतगाथासंक्षेपार्थः"—विशेषा टी गा ११७ । नन्दी म टी १४२ ।

पृ० ९ पं० १८ 'अपवादमाह'—"एवं सर्वसामान्येनेन्द्रियोपलब्धेः उत्सर्गेण मति-ज्ञानत्वे प्राप्ते सति अपवादमाह—मोत्तूणं दव्वसुयं सुत्ता दव्वसुयं । किमुक्तं भवति—

पृ० १० पं० १६ 'मल्लकप्रतिबोधक'—"एवं अट्ठावीसइविहस्स आभिणिबोहियनाणस्स वंजणुग्गहस्स परूवणं करिस्सामि पडिबोहगदिट्ठंतेण मल्लगदिट्ठंतेण य । से किं तं पडिबोहगदिट्ठंतेणं ? । पडिबोहगदिट्ठंतेणं से जहानामए केइ पुरिसे कंचि पुरिसं सुत्तं पडिबोहिज्जा अमुगा अमुग त्ति, तत्थ चोयगे पन्नवगं एवं वयासी—किं एगसमयपविट्ठा पुग्गला गहणमागच्छंति दुसमयपविट्ठा पुग्गला गहणमागच्छंति जाव दससमयपविट्ठा पुग्गला गहणमागच्छंति संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति ? । एवं वदंतं चोयगं पण्णवए एवं वयासी—नो एगसमयपविट्ठा पुग्गला गहणमागच्छंति नो दुसमयपविट्ठा पुग्गला गहणमागच्छंति जाव नो दससमयपविट्ठा पुग्गला गहणमागच्छंति नो संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति से तं पडिबोहगदिट्ठंतेणं । से किं तं मल्लगदिट्ठंतेणं ? । मल्लगदिट्ठंतेणं से जहानामए केइ पुरिसे आवागसीसाओ मल्लगं गहाय तत्थेगं उदगबिंदुं पक्खेविज्जा, से नट्ठे, अण्णे वि पक्खित्ते से वि नट्ठे, एवं पक्खिप्पमाणेसु पक्खिप्पमाणेसु होही से उदगबिंदू जे णं तं मल्लगं रावेहि त्ति, होही से उदगबिंदू जे णं तंसि मल्लगंसि ठाहि त्ति, होही से उदगबिंदू जे णं तं मल्लगं भरिहि त्ति, होही से उदगबिंदू जे णं तं मल्लगं पवाहेहि त्ति । एवामेव पक्खिप्पमाणेहिं पक्खेवेहिं पुग्गलेहिं जाहे तं वंजणं पूरियं होइ ताहे हुं ति करेइ, नो चेव णं जाणइ के वि एस सद्दाइ ? तओ ईहं पविसइ, तओ जाणइ अमुगे एस सद्दाइ, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ णं धारणं पविसइ, तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं......से तं मल्लगदिट्ठंतेणं" । नन्दी सू० ३५। विशेषा० गा० २९ ।

पृ० १० पं० १६ 'तत्सामान्यावसायात्'—विशेषा० गा० २ ।

पृ० १० पं० २७ 'अर्थावग्रह'—विशेषा० गा० २५२ । जैनतर्कभाषा पृ० ४ ।

पृ० १० पं० २८ 'स चैकसामयिकः'—विशेषा० गा० ३३३ ।

पृ० ११ पं० ३ 'मलयगिरि'—नन्दी म० पृ० ७१ ।

पृ० ११ पं० २० 'एकत्र वस्तुनि'—'व्यभिचरत्यवयवमिति व्यभिचारिणी, सा च एकपक्षावलम्बिनी—सामान्यमेवास्ति न विशेषाः सन्ति, विशेषमात्रं वा समस्ति न सामान्यमित्यादिका, यतः सा नयान्तरेणापक्षिप्यते असमत्वात्, अतो व्यभिचारिणी, न व्यभिचारिणी अव्यभिचारिणी । का ? या सर्वनयवादान् साकल्येन परिगृह्य प्रवृत्ता क्वचित् सामान्यं द्रव्यास्तिकप्राधान्यतः सत्यम्, विशेषाश्च पर्यायावलम्बनमात्रसत्या इत्यादिप्रकारेणाव्यभिचारिणी" तत्त्वार्थ टी० पृ० २३ ।

पृ० ११ पं० २४ 'तत्त्वार्थसूत्रादि' "अपायसद्द्रव्यतया मतिज्ञानं"—तत्त्वार्थ भा० १.११ ।

"यन्मतिज्ञानं भणितबोधात्मं तत् किंरूपं परोक्षं प्रमाणं वा साध्यते ? उच्यते—अपायसद्द्रव्यतया मतिज्ञानम् भणितत्वेन उपन्यस्तम्, अपायो निश्चय ईहानन्तरवर्ती । सद्द्रव्यमिति—शोभनानि द्रव्याणि सम्यक्त्वदलिकानि, अपायश्च सद्द्रव्याणि च तेषां भावः स्वरूपानुभूतिः तया इत्थंभूतया मतिज्ञानं भवति । एतदुक्तं भवति—मतिज्ञानस्य अवग्रहादिभेदस्य

सन्तीति कथं मन्यामहे सम्यग्मात्रैकदेशसमाश्रिणः संशयादयोऽपि भवन्त्येव इति कथं न ते ज्ञानम् ? ।

जे संसयाइगम्मा धम्मा वत्थुस्स ते वि पज्जाया ।
तदहिगमत्तणओ ते नाणं चिय संसयाईया ॥ ३२१ ॥

अनन्तानन्तपर्यायं सर्वमपि वस्तु इति भगवद्भिरुक्तम् । तस्य च घटादिवस्तुन एकस्मिन् काले एकमेव कञ्चित् घटत्वादिपर्यायं सम्यग्दृष्टिरपि गृह्णाति । अतोऽनन्तपर्यायमपि वस्त्वेकपर्यायतया गृह्णतस्तस्यापि कथं ज्ञानं स्यात्, अन्यथास्थितस्यान्यथाग्रहणात् इत्याशङ्क्याह—

पज्जायमासयन्तो सव्वं पि तओ पओयणवसाओ ।
तप्पियपज्जायं चिअ सं गिण्हइ भावओ वत्थुं ॥ ३२२ ॥

एतदुक्तं भवति—भावत आगमप्रामाण्याभ्युपगमाभिप्रायतः सम्यग्दृष्टिना यथावस्थितमनन्तपर्यायं वस्तु सर्वेण गृहीतमेवास्ते, केवलं प्रयोजनवशात् एकपर्यायमाश्रयति ।

मिथ्यादृष्टेरपि एवं भविष्यतीति चेत्, न, इत्याह—

निच्छयकाले वि तओ न तहाभावं विदंति ते वत्थुं ।
मिच्छद्दिट्ठी तम्हा सव्वं चिय तेसिमन्नाणं ॥ ३२३ ॥

अथवा भावानमात्रमेव तेषाम्, किन्तु अयाथार्थ्यमपि किञ्चित् इति दर्शयन्नाह—

कज्जपरं पमाणं जिणमओ चेव मिच्छद्दिट्ठीण ।
मिच्छाभिणिवेसाओ सव्वत्थ घडे व्व पडबुद्धी ॥ ३२४ ॥

अथ प्रकारान्तरेणाऽपि तत् समर्थयन्नाह—

अहवा अहिंदनाणोवओगओ सम्मयत्तणं होइ ।
तह संसयाइभावे नाणं नाणोवओगाओ ॥ ३२५ ॥" विशेषा० । मल० पृ० २५१।

पृ० ११ पं० ३३ 'जीवाजीवा०'— "तत्त्वार्थश्रद्धानम् सम्यग्दर्शनम् ।" तत्त्वार्थ० १.२।

पृ० १२ पं० १ 'सत्संख्या'—"निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः । सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ।" तत्त्वार्थ० १.७-८।

पृ० १२ पं० ७ संमतौ महावादिना—

"चरणकरणप्पहाणा ससमय-परसमयमुक्कवावारा ।
चरण-करणस्स सारं णिच्छयसुद्धं ण याणंति" ॥ सन्मति० ३.६७।

पृ० १२, पं० ७ 'तमेव सच्चं'—

"से नूणं भंते तमेव सच्चं णीसंकं, जं जिणेहिं पवेइयं ? । हंता गोयमा तमेव सच्चं णीसंकं जं जिणेहिं पवेइयं ॥"—भगवती श० १ उ० ३ सू० १ । आचा० श्रु० १ अ० ५ उ० ५ सू० १६२।

पृ० १२, पं० ८ 'मापतुष'—

"तत्र सूरिरक्षरं च पाठे भ्रात्वा तपोधनम् ।
सामायिकश्रुतस्यार्थं च संक्षेपादपीपठत् ॥

सत्येऽपि प्रमाविशेष्ये तत्प्रकारीभूतवैशिष्ट्यं भासत इति तुल्यतेति भावः । मात्रास्तु प्रमेयमेव गृह्यते । प्रमात्वप्रकारेण गृह्यते इत्यर्थः इत्याहुः । तदसत् अप्रमात्वव्यवसायेन प्रमात्वग्रहस्या-नुपपत्तेः–तत्त्वचि० प्र० माथुरी पृ० १७४ ।

पृ० १५ पं० २१ 'जे एगं जाणइ'–तुलना–विशेषा० गा० ३२० ।

पृ० १५ पं० १० 'घट इत्यपायोत्तरमपि'–विशेषा० गा० १८२–१८८ । जैनतर्कभाषा । पृ० ४४५ ।

पृ० १६ पं० ९ 'अङ्गोपाङ्ग'–"सुयनाणे दुविहे पण्णत्ते–तं जहा–अंगपविट्ठं चेव अंगबाहिरं चेव ॥" स्था० २.१.७१ । नन्दी सू० ४४ । तत्त्वार्थ० १.२० ।

पृ० १६ पं० १० 'एकादीनि'–तत्त्वार्थसूत्रे तु इत्थं पाठः–"एकादीनि भाज्यानि युगपदेकस्मिन्ना चतुर्भ्यः ।" तत्त्वार्थ० १.३१ ।

"तद्यथा–कस्मिंश्चिज्जीवे मत्यादीनामेकं भवति कस्मिंश्चिज्जीवे द्वे भवतः । कस्मिंश्चित् त्रीणि भवन्ति । कस्मिंश्चित् चत्वारि भवन्ति । श्रुतज्ञानस्य मतिज्ञानेन नियतः सहभावः तत्पूर्वकत्वात् । यस्य श्रुतज्ञानं तस्य नियतं मतिज्ञानम् । यस्य तु मतिज्ञानं तस्य श्रुतज्ञानं स्याद् वा न वेति ।" तत्त्वार्थ० भा० ।

'एकादीनि भाज्यानि' इत्यादिसूत्रीया सर्वार्थसिद्धिर्न भाष्यमनुधावति, । तत्र मतिश्रुतयोः नियतसाहचर्यस्यैव प्रतिपादितत्वात् क्वापि मतिज्ञानस्य श्रुतविरहिणोऽसंभवात् ।

पृ० १६ पं० ११ 'अस्पृष्टस्पृष्टार्थमात्रग्राहित्वेन'–

"अत्थे अभिन्नक्खरक्खरविसेसओ मइ-सुयाइं भिंदन्ति ।
जं मइनाणमणक्खरमक्खरमियरं च सुयनाणं ॥ १६२ ॥

अत्राचार्यो दूषणमाह–

जइ मइरणक्खरच्चिय भवेज्ज नेहादओ निरभिलप्पे ।
थाणुपुरिसाइपज्जायविवेगो किह णु होज्जाहि ? ॥ १६३ ॥

यदि मतिरनक्षरैव स्यात्–अक्षराभिलापरहितैव यद्यभ्युपगम्यते, तर्हि निरभिला-प्येऽप्रतिभासमानाऽभिलापे स्थाण्वादिके वस्तुनि ईहादयो न प्रवर्तेरन् । ततः किम् ? इत्युच्यते–तदा मत्यवग्रहस्येव स्थाण्वादिविकल्पाभावात्–'स्थाणुरयं पुरुषो वा' इत्यादि पर्यायाणां वस्तुधर्माणां विवेको विचारोऽन्वयव्यतिरेकादिना परिच्छेदो न स्यात् । यथाहि परमतरं ज्ञानं न तत्र स्थाणुपुरुषपर्यायादिविवेकः यथाऽनभ्युपगमे, तथा चेहादयः, तस्मात् तेष्वपि नाक्षरो प्राप्नोति ॥"–विशेषा० टी० ।

पृ० १६ पं० २६ 'अर्धजरतीयन्याय'–"न चेदानीमर्धजरतीयं लभ्यम् । तद्यथा । अर्धं जरत्याः कामयतेऽर्धं नेति ।" पात० महा० ४.१.७८ ।

"न चार्धजरतीयमुचितम् । न हि कुक्कुट्या एको भागः पाकायापरो भागः प्रसवाय कल्प्यतामिति ।" ब्रह्म० शां० १.१४ । नैष्कर्म्य० १.८ ।

